श्रीगणेशाय नमः ॥

अथ

श्रीमत्कविराजजयदेवपण्डितकृतं

# गीतगोविन्दाख्यं

## सटीकं काव्यम्

प्रारभ्यते

---

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरु रयं त्वमेव तदिमं राधे गृहं प्रापय ॥ इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुंजद्रुमं राधामाधवयोर्जयन्ति यमुना कूले रहः केलयः ॥ १ ॥

श्रीराधाकृष्णाभ्यांनमः ॥ भद्रायभवतां भूयात्कृष्णः सद्भक्तिभावितः ॥ कालिन्दी जलसंसर्गं मेघश्यामोतिसुन्दरः ॥ १ ॥

इहकविः प्रारिप्सितस्यनिर्विघ्नपरिसमाप्त्यर्थं कृष्णस्मरणरूपवस्तु निर्देशलक्षणं मंगलाचरणं आवश्यचरति मेघैरिति राधामाधवयोः रहःकेलयः यमुनाकूले जयन्तीत्यन्वयः राधाकृष्णयोः रहःकेलयः एकान्तक्रीडाः यमुनाकूले यमुनातीरे जयन्तिसर्वोत्कर्षेण वर्तन्ते कथंभूतयोः राधामाधवयोःप्रत्यध्वकुंजद्रुमं अध्वनिमार्गे कुंजलतागृहे द्रुमे वृक्षे चकृत्य इति नन्दनिदेशेन नन्दाज्ञया चलितयोः अथवा अध्वं कुंजद्रुमंप्रति प्रति

—ि—

**वाग्देवताचरितचित्रितचित्तसद्मापद्मावतीचरणचारणचक्रवर्ती ॥ श्रीवासुदेवरतिकेलिकथासमेतमेतंकरोति जयदेवकविःप्रबन्धम् ॥ २ ॥**

ननु जयदेवस्य पुरुषत्वाद्गोप्यकेलिकथनेकथमधिकार इत्याशिष्यस्वस्यस्तत्त्वं निराकुर्वन् अभिसाराख्यप्रबन्धचित्तनिरूपणेनैव विस्तारयति श्रीराधानुग्रहंचप्रार्थयते वाग्देवतेतिजयः श्रीकृष्णःदेवोयस्यसएवकविः काव्यकर्ताएतंप्रबन्धंकरोतीत्यन्वयः प्रबन्धचिह्नंभोजे शृंगारैकप्रधानोयोगीततालादिसंयुतः अभिसारार्थनिपुणः प्रबंधः संप्रकीर्तितः प्रकर्षेणबंधोन्योन्यासक्तिरूपोनायकनायिकयोर्यत्रप्रबंधः कीदृशं श्रीःशृंगारः शोभासंपत्तिःकृतिः कांतिरूपाराधैवचात्रप्रस्तुता तथोक्तंश्रीभागवते यउत्तराननयकोशात् दिवंयौःकृतिः स्वर्गोज्ञायते द्योततइतियोः वैकुंठस्तद्वदत्रापिराधैवज्ञातव्या वसुषुश्रष्ठासुदीव्यतीति वसुदेवोनंदोवासुदेवस्तयाराधया सहितोवासुदेवस्तस्ययारतिकेलयः स्नेहक्रीडाप्रकारास्तासांयः कथाश्चतुःषष्टिकथात्मिकास्ताभिः समेतं युक्तं कीदृशः वाचांदेवता श्रीकृष्णस्तस्य चरितंरासीत्मिकालीला वैदग्ध्यं वातपातेनवा विचित्रितंमंदिरं कामोद्दीपकप्रकारान्वितं वाचित्तमंतःकरणमेव सद्मगृहंयस्यस्यःतथोक्तं श्रीभागवते सावाग्ययातस्यगुणानगृणीत इत्यनेनान्यत्र वाग्देवत्वंनिरस्तंगृहमपि विविधोपकरणैश्चित्रितं भवतितद्वदत्रापि भगवद्गुणचित्रैरलंक्रियते प्रवेशमात्रेणपवित्रीकृतंवर्द्धमानस्तेहेना लिखितंविविधकेलिप्रदर्शनेन प्रकाशनेनवाचित्रितमितिभावः कीदृशः पद्मावतीनामस्तस्य प्रभवाः कामोवाऽस्यास्तस्यत्राचरणयोश्चारणेनृत्यतिपुनतारूपेनतेने चक्रवर्ती नृपराजो नटराजोवसदा शृंगारित्वात् एतेनकवेः शूरित्वंसूचितं पद्मानिक्रीडार्थं यत्रसापद्मावती अथवा सौंदर्यसौभाग्यद्योतकं सामुद्रिक शास्त्रोक्तं पद्मंवाहस्तेयस्याःसापद्मावती श्रीराधा तस्याश्चरणयोश्चारणं सेवक तयात्मनिवेदनं तत्रचक्रः सेवकसमूहस्तद्वर्तितुंशीलं यस्यसः तचरणे लालने चक्रवर्तित्वमात्मनोभिमन्यमानश्चक्ररथांगस्तस्मिन्यवानितिवा वक्रंच शृंगारीचेत्कविः काव्यं तदा समयं जगत् सएववदशृंगारी तदाविरसतां व्रजेदिति श्लोषोक्तिरलंकारः आलेख्याश्चर्ययोश्चित्रमित्यमरः कविः काव्यकरेशूरेचेतिविश्वः चक्रःकोकेव्रजेपुंसिक्लीवे सैन्यरथांगयोरित्यपि गृहंगेहोदवासिते वेश्मसद्मनिकेतनमित्यमरःस इत्येकाक्षरे ॥ २ ॥

एवंतावद्विद्वज्जन मन्त्रस्यर्थमन्यकाव्यापेक्षयास्वकाव्योत्कर्षं प्रथयन् गीतगोविंदश्र वणे श्रोतृगणंप्रोत्साहयति यदाति हेदाः बहुपुण्यप्रदाः यदिहरिस्मरणे श्रीहरेः स्मरणे मनश्चित्तं सरसंभगवत्प्रणययुक्तं शृंगारसः तत्साहित्यं वाराभिलाषं वा तदाजयदेवसर-स्वतीं गीतगोविंदरूपांवाचंश्रणुतेन्वयः मनस्तत्कर्तुमभिवांछातदात्यादरेण श्रणुतात द्वारणमेवतदेवकरिष्यतीतिभावः किंच यदिविलासोश्रीणां प्रतितिथिकेशाक्ष्यांगं स्व शांश्वरणोर्ध्वं चरति कोषोक्तस्तस्य कलासुचतुःषष्टिः क्रीड़ासुकुतूहलं कौतुकं विलास लक्षणं रतिकोषोक्तं ग्रंथविस्तरभयान्नलिखितं कीदृशीं मधुरान्निष्टा श्रीराधाशृंगार प्राधान्यात् कोमलाससृद्धला प्रणयपूर्वक श्रीकृष्णवचन संयुक्तत्वात् कान्ताकमनीयास्नि ग्धसाहचर्यादिवचनयुक्तत्वात् तत्पद्य नामावलीपरम्पराधस्यास्तां कर्मधारयःसमासःमधु रंयथा मधुरंरसवत् वाचि वस्तून्यपिरसस्विासि येनमाद्यंतिधीमंतो मधुनेव मधुव्रता इति दण्डी सुकुमारंयथा सुप्रयोगैर्महोत्कृष्टैर्युक्तमस्पृष्टसंधिभिः सुकुमारार्थसंयुक्तं सुकुमारं प्र चक्षते कांतंयथा यन्मनाः श्रोत्रविशदंप्रह्लादजनकंभवेत् शब्दबंधानुयोगेन तत्कांतमभि चक्षत इत्यपि तत्रमधुरं द्विविधं अक्षराश्रितमर्थाश्रितंच तत्राक्षरमधुरत्वमपृथक्पदत्वं अर्थमधुरत्वं वनवैचित्र्यं कोमलत्वमपिद्विविधं बंधस्यापरुषत्वं शब्दकोमलत्वमर्थे कोम लत्वंवा तत्सर्वमन्यकवीनां काव्येसाधारणं अत्रत्वसाधारणं राधाकृष्ण इतीनामेतत्सर्वं अतोजयदेवसरस्वतीसर्वश्रेष्ठां श्रणुतेतिभावः कलास्याचंद्रकलायां कलास्यात्कीरनादि ष्वितिविश्वः दीपकोपमलंकारः तल्लक्षणंशिशुबोधेप्रस्तुत्यैचित्तमंवादियद्वाक्यैः सह संगतिः दधानंदीपयत्यर्थानदीपकंतदुदाहृतं एवमेतैः शब्दैर्विषयप्रयोजनसंबंधाधिकारि णोदर्शिताः तत्ररहःकेलयइतिविषयःयमुनाकूलइत्यधिकरणं राधामाधवयोरितिवसंत कालसमयः सद्भक्तिरितिप्रयोजनं प्रतिपादकप्रतिपाद्यरूपः संबंधः श्रीराधाकृष्णारसभा वितांतःकरणएवाधिकारीत्येवं सर्वानिक्रीड़ासाधनानिनिरूपितानि ॥ ३ ॥

**वाचःपल्लवयत्युमापतिधरः संदर्भशुद्धिंगिरां जानी ते जयदेव एव शरणःश्लाघ्यो दुरूहद्रुतेः ॥ शृंगारोत्तरस त्प्रमेयरचनैराचार्यगोवर्द्धनस्पर्द्धी कोपि न विश्रुतः श्रु तिधरो धोयी कविक्ष्मापतिः ॥ ४ ॥**

इदानींस्वसरस्वती प्रामाण्योत्कर्षायकेनचिद्भागवतोत्तमेन कविराजसभायांवर्णि तपद्यं संगृह्यते कविनानन्वेतनानागुणसंयुक्तापि सरस्वतीलक्षणासेन महानृपतिवरस भायामुमापतिधरादीनां कवीनामप्यस्तिसाकिंन श्रोतृणांश्रवणरतिजनकेत्याहवाचइति

मेशीवाच वाची पल्लवयति विस्तारयति का

भावः तथाच राजसभायां शरणइति नामाकश्चित्कविः उरूहस्यगूढार्थस्य श्रुतेःशीघ्रो चारणतः श्लाघ्यः स्तुत्यः तथावास्यकवेः काव्यंगूढार्थत्वादिदोषस्तं प्रसादादिगुणरहितं चेति अतएव विद्वज्जन मनोऽरतिजनकमितिध्वनितं तथाच शृंगारोत्तरस्य सत्प्रमेय स्यशृङ्गाररसं एवउत्तरः श्रेष्ठोयत्र शृंगारेणोत्तरंमुख्यंवा सत्प्रमेयमुत्तमंवस्तुतस्य रचनैः कवितायां मुख्यप्रकथनैराचार्यगोवर्द्धनाचार्येण सहसदृशोवात्रकोपि विश्रुतोन विख्यात शृंगाररस मुख्यरचनायामेवतस्य प्रौढ्यंरसांतर कथनेस्तोप्य समर्थएव अतस्तत्कवि त्वं न सज्जनहृदयगमकमितिभावः आचार्यपदमुपहासार्थं धोयीनामाकवि-क्ष्मापति कविराजःश्रुतिधरः श्रवणमात्रग्राही श्रुतार्थधरोवा ननु तस्यकविरचनायास्वकौशलं उच्चारितमात्रग्राहकइतिभाव क्ष्मापतिशब्देनाहंकार कथनायराजोपमानतु कविगणन तस्येत्यर्थः गिरांवचसांसंदर्भशुद्धिं गुणालंकारादिग्रंथनविशेषं जयदेवकविरेवजानीते नान्यःकश्चित्कविः अतएवजयदेवकृतगीतगोविंद काव्यश्रवणे संतोषस्तथानान्यत्रकाव्ये अतएवतदेव श्रोतव्यमितिभावः पल्लवः किशलये पिंगेविलपे विस्तरे चलइतिविश्वप्र काशः लघुक्षिप्रमरंद्रुतमित्यमरः उत्तरंप्रतिवाक्येस्यादूर्द्धेदिव्योत्तमेऽन्यवदितिच उदात्त नामायमलंकारः तल्लक्षणं शिशुबोधे उचैः समृद्धिमद्वस्तुवर्णनंस्यादुदात्तता सामर्थ्यंजा यते यत्रचरमोत्कर्ष चिंत्रितेति ॥ ४ ॥

## गौडमालवरागेरूपकताले ॥

**प्रलयपयोधिजलेधृतवानसिवेदं । विहितवहित्रचरित्रमखेदं ॥ केशवधृतमीनशरीर जयजगदीशहरे ॥ १ ॥**

एवंतावत्पूर्वश्लोकोक्ताः राधामाधवयोः रहः केलयस्ताएव श्रीकृष्णचंद्रसंभोग पुष्ट्यर्थंभगवल्लीलाविलासनां प्रतापसौभाग्यादीनांच श्रीकृष्णचंद्राधीनत्वंवदन् दशाव तार प्रस्तावे श्रीकृष्णचंद्रस्यनायकचूडामणित्वंच संयोगरसपुष्ट्यर्थं विप्रयोगरसमाह प्रलयेत्यादिना यथासंभोगरसपुष्ट्यर्थं विप्रयोगनिरूपणं कारणापितेहिवआदौभूयान् रागोहिजायते गीतस्यास्य गौडमालवरागोरूपकताल ध्रुपदंच गीतलक्षणंस्वरताल ग्रामभेदराग सगांगभूषितं संस्कृतंप्राकृतं वाथगीतंगीतविदोविदुरिति रागलक्षणं नितं बिनी चुंबितवक्रपद्मः शुकश्रुतिः कुण्डलवान्प्रमत्तः संकेतशालां प्रविशन्प्रदोषेमालाधरो मालवरागराजःताललक्षणं रूपकेस्याद्द्रुतं लघुइति गीतरत्नाकरः षोड़शध्रुवक स्तल्लक्षणं ग्रन्थविस्तरभयान्नलिखितं पदस्यपुनः पुनरावृत्ति ध्रुवपदं हेकेशवसुखशायिन्

——————धृतमीनशरीर धृतंमीनस्यशरीरमिवशरीरंयेन धृतमीनवपुइत्यर्थः

मंगलार्थश्च तद्वदत्रापि धृतमीनवन्धएवमङ्गलं हेदेवक्रीड़ाकृतेः हेहरे भक्तजनसंतापहारिन् सर्वामङ्गलहारिन्वा युवतिकामतापनाशनइतिवा जयजयइतिवीप्सया अतिशयेनसर्वो त्कर्षेण वर्तस्वजयजगदीशवापाठः गच्छतीतिनानाशृंगारसमापद्यते तत्रजगद्युवतिवृंदत स्येशनायकचूड़ामणौ प्रथममीनवन्धकेलिमाह प्रलयेति प्रकर्षेणमनसः लयस्तदाकार तापत्रसुरतेसप्रलयः सयथा सुरतेचसमाधौचमनोपत्रनलीयते किंतेनसुरतेनार्थः किंतेन चसमाधिना तत्रानंदश्रमजनितपयोधौ यज्जलंतस्मिन् वेदंवात्स्यायनशास्त्रप्रतिपाद्यमीन वन्धादिकुशलत्वं वेद्यते ज्ञायतेरतिकोपोक्तः केशस्पर्शादिलीलांवाखेदंयथास्यात्तथाधृत वानासित्वं योषितवानसीत्यर्थः कीदृशंवेदंविहितंवाहित्रस्यपोतस्यचरित्रंकेलि जलधिपार प्रापकरूपंयेन एतेननायकचूड़ामणित्वंसूचितं पक्षेमीनंरूपंस्तौति प्रलयकालीनापेपयो धयो जलधयस्तेषां जलेमज्जंतंवेदंमीनशरीरं लीलयाधृतमादायनतुकर्मवशेनाखेदं यथा स्यात्तथा धृतवानसित्वं अल्पंजलनिवासोमत्स्याभीष्टः सुतरां जलधौ तथाचश्रुतिः यो ब्रह्माणं विदधातिपूर्वंयोवेदांश्चप्राहिणोतितस्मै तमेवात्मप्रकाशं मुमुक्षुर्वैशरणमहं प्रपद्यइ तिकोब्रह्माचईशः शिवश्चतौवसौसेवकौत्तमौयस्येति हेकेशव धृतंमीनशरीरं येनतत्संबोधनं जयसर्वोत्कर्षेवर्तस्व ननुसर्वोत्कर्षहेतौ किंसामर्थ्यंतत्राह हेजगतांचतुर्दशभुवनानांईश्व रः हेहरे हरतिभक्तानांक्लेशं भजनानुसारेणेतितथा तच्चोक्तं श्रीभागवते ह्यंतस्थोह्य भद्राणि विधुनोतिसुहृत्सतामिति एतनदुष्करकार्यशीघ्रकारित्वेदक्षतालक्षणो नायकगुण उक्तः प्रलयोनष्टसंज्ञेत्यमरः १

## क्षितिरतिविपुलतरे तवतिष्ठतिपृष्ठे।धरणिधरणकिण चक्रगरिष्ठे॥ केशवधृतकच्छपरूप जयजगदीशहरे ॥२॥

कच्छपंसदृशबंधांतरमाह हेधृतकच्छपरूप हस्तौपादौचसंकोच्यकांतामुपरिवल्लभः स्थापयेत्सुरतेयत्रकच्छपः संप्रकीर्तितः तवपृष्ठेपृष्ठविभागे क्षितिर्वृंदावननिकुंजभूमिस्तिष्ठ तिवर्ततइत्यन्वयः कीदृशेपृष्ठे अतिविपुलतरे अतिशयेनविपुलयतिविशेषेणमहत्त्वं रस स्यप्राप्नोतीतितथा पुलमहत्त्वेधातुः अनेननायकस्याश्रांतोद्वहत्वंसूचितं कीदृशेधरणि धरणकिणचक्रगरिष्ठे पूर्वोक्तबंधधारणेन किणांकुंकुमादिचिह्नंयच्चक्रं चक्राकृतिकंकणंतेन गरिष्ठेप्राप्तगौरवेऽनर्घ्येइत्यर्थः अन्यद्धिरत्नमाचिह्नमत्रणभवानर्घ्यमिदं पुनस्त्वच्छरीरत्व प्रियानखचिह्नितमप्यमूल्यमिति श्रीराधोक्तिरत्रसर्वत्रज्ञेया तथथा सर्वस्यापिहिरस्यत्रणे देः परिहायतेदयितामधखनंतुत्रणितंपात्यनर्घ्यतामिति तिष्ठतिफलपर्यंतकार्यनिर्वाहक तयास्थिरताखलक्षणोनायकगुणउक्तः क्षितिः सहरनशीलेस्यादिरक्तच धरास्वपीतिमहो दधिः पृष्ठंपृष्ठेप्रदेशेस्यात्पृष्ठंस्यादिविलाशग्र इतिमेदिनीकारः पक्षेकच्छपरूपस्तौतिहेके शव हेधृतकररूप धृतंकच्छपस्तरूपंयेनताहश जयजयस्वोत्कर्षमाविष्कुरु आविष्कुरु

नुर्निर्थंकच्छपस्वरूपंमयाकस्याहेतोर्धृतमित्यतआह क्षितिरितितवपृष्ठेक्षितिः पृथ्वीति ष्ठतिकच्छपपृष्ठमत्यंतकठिनतरं क्षोण्याधरणमपसारणंचयात्यनुकरणार्थमितिभाव: न नुपंचाशत्कोटियोजनविस्तीर्णापृथिवी ममपृष्ठेकथंस्थितेत्यतआह अतिविपुलतरइतिअ- तिशयेनधरापेक्षयाप्यधिकविस्तीर्णे पुनःकीदृशे धरणिधरणकिणचक्रगरिष्ठे धरण्याध रायाधरणेनयज्ञातं किणचक्रंरक्ताकृतमृतरुधिरमंडलंतेनगरिष्ठे गौरवयुक्ते एतेनपीन रस वचोक्तंकिणःसान्मृतरक्तकइतिविश्वप्रकाशः घुणचिह्नेव्रणकिणावितिहारावलीकूर्मे कमठकच्छपावित्यमरः चक्रंचक्रेथ निर्दिष्टं रथचक्रेऽरिचक्रकेपीतिवैजयंतीयथारतिचक्रे प्रवृत्तस्य नैवशास्त्रं न चक्रम इति धराधरणीत्यमरः कच्छपः कमठेप्रोक्तस्तदंबधेपिरति प्रियैरितिभोजे विस्तीर्णेविपुलः प्रोक्तविपुलत्वप्रदेपिचेतिकोशसमुच्चये २ ॥

## वसतिदशनशिखरेधरणीतवलग्ना।शशिनिकलंककलेवनिमग्ना ॥ केशवधृतशूकररूप जयजगदीशहरे ३ ॥

एवंविधात्मिकक्रेलिमुदितं तदंगसौंदर्यंवर्णयंत्याह वसतीत्यादिना हेकेशवधृतशूकर रूपशूकरोति तनूकरोतिकंदानितिशूकरः अत्रकंदर्पणाने तथा त्वंतस्योच्यतेउक्तंच कामि मिनीनयनकज्जल पंकांउत्थितोमदनमत्तवराहः कामिमानसवनांतरचारी कंदमुत्पणति मानलतायाः इतितवदशनशिखरेधरणी लग्नातिष्ठतीत्यन्वयःधत्तेरसं प्रेयसीवाधरणीति च्छीलासातत्रदशनंशिखरेदंताग्रे दशान क्षत विधानेत्रसतिकस्मिन् केवशशिनिपरमानन्द जनके चंद्रेनिमग्नाकलंककलेवसायथा विद्यमानापिनशोभातिरस्करणीतिएतेननायक- स्य गुणप्रकर्षोदर्शिताः पद्येवाराहवतारमाहस्तौतिचधृतशूकररूपेसति हेकेशव हेधृत शूकररूप धृतंशूकरस्यरूपं येनजयजयवाराह प्रयोजनमाहवसतीत्यादि तवदशनशिखरे दंतस्याग्रेलग्ना सक्ताधरणीवसुंधरावसति अत्रनिमग्नोपदोपादानेन बालचंद्रस्य सादृश्यं दशनेकार्यते अनेनायासेनदंष्ट्रा धरण्युद्धरणे नवलातिशयनिरूपणेनमहा सत्वतालक्ष णोनायकगुणउक्तः शेषंसमानं रदनादशनादंताइत्यमरः कलास्यादंशन्मात्रकेरतिहला युधः अंशोशिखरामित्याहुरद्रिश्रृंगेचधरणि शूकरशूकरे प्रोक्तस्तनुकारिणि वास्तूनीति भोजेनउत्प्रेक्षा गर्भितोपमालंकरः ३ ॥

## तवकरकमलवरेनखमद्भुतशृंगं । दलितहिरण्यकशिपुतनुभृंगं ॥ केशवधृतनरहरिरूप जयजगदीशहरे ४ ॥

पुनःक्रोशशाक्षप्रदर्शितां नखक्षुतादिरूपां लीलांचतुरानापि कारांतरेणाह तवेति क्रीड़ायां प्रवर्तमानस्याग्रपश्चाद्भावो नास्तितत्तदवसर जन्यत्वात् नखक्षत निर्दयत्वक थनायरतिसमये नृसिंहरूप इत्युक्तंतवकरकमलवरे तवहस्तकमलवरे श्रेष्ठअद्भुत शृंगंनख

मस्तिकीदृशं अद्भुतमाश्चर्यं अनकमग्रभागो यस्यतस्तथारक्तत्वकथने नकंजसाम्यं पुन-
कीदृशं दलितहिरण्यकशिपुस्तनुभृंगं दलितो विदारितो हिरण्यकशिपोः स्वर्णकश्यपायां
तनुरेवभृंगो यत्रतत् अन्यत्रभ्रमरेण कमलंविदार्यते अत्रतुसएव दलित इत्यनेन शृंगार
रस पूर्तिरुक्तेतिभावः केशवेत्यादि पूर्ववत्पक्षे नरहरिरूपंस्तौतिहेकेशवहेधृतनरहरिरूप
धृतनरहरिरूपं येनतत्संबोधनं जयजयश्रीनृसिंहावतार प्रयोजनमाह तवेत्यादितवकरकं
मलवरे करोहस्तःसएवकमलवरः कमलश्रेष्ठस्तत्रनखं तिष्ठतिकीदृशं अद्भुतशृंगं अद्भुत
आश्चर्यरूपं शृंगमग्रभागो यस्यतादृशं अद्भुतत्वमेवाह दलितेत्यादि दलितोविदारितो
हिरण्यकशिपोः दैत्यस्यतनुर्देहः सएवभृंगो भ्रमरोयेन तादृशं अन्यत्रकमलो तन्मकरं
दपानादिना भृंगानां तृप्तिर्भवति इहतु नृहरिकरकमलाग्रभागेन भृंगएव विदारित इत्य
द्भुतत्वं नरहरिरूपेत्यनेनातिविकट शौर्यबलातिशयेन नायके साहसिकत्वाति सम
गुणः सूचितः माखिक्ये शिखरेशृंगं भूभृतांच विषाणकेपीति वैजयंती पुनर्भवः कररुहो
नखोस्त्रीत्यमरः शृंगंप्रभुत्वे इतिविश्वः हिरण्यकशिपुर्दैत्येशयने स्वर्णनिर्मितइतिभोजे ४॥

## छलयसिविक्रमणेबलिमद्भुतवामन । पदनखनीरजनितजनपावन ॥ केशवधृतवामनरूप जयजगदीशहरे ५ ॥

आलिंगनरूपांक्रीडामाह छलयसीत्यादिना हेकेशवहेधृतवामनरूप वासयतिनाम
यतिआलिंगनादिभिर्मानादिनावायः सवामनः तत्संबोधनं तेनमानेनत्वं विक्रमणेसुरत
विक्रमेसुरतपराक्रम इत्यर्थः बलिंत्रिवलिं छलयसिवंचयसिविपरीत विधानेन जात्यात्र
मयसीति सूचितं हे अद्भुतवामन आश्चर्यवामनपदनखेति सम्बोधनं विपरीत सुरतेन
तत्रयं पदनखक्षतं तत्क्षालनाययन्नीरंतेनजनितं जनस्यपावनं चित्तप्रसादोयेनतत्संबुद्धिः
चित्तप्रसादकारिन् एतेननायिकोत्कर्षः पावनत्वंच नायकस्योक्तं ननुनखदानं करनखेनैव
जन्यतेनपदं नखेनेति सत्यमेतत्तु विपरीतरतौनायिकापद नखक्षताभिप्रायेण ज्ञातव्यं
पक्षेवामनरूपं स्तौति हेधृतवामनरूपेति अद्भुताश्चर्यरूपवामन अद्भुतमदृष्टपूर्वं दैत्या
नां दर्पंनाशयतीतिवामनअद्भुतत्वमेवाह पदनखेति पदनखसंबंधि यन्नीरं गङ्गाजलंतेन
जनितं जनानांपावित्र्यं येनतादृशजयकेशवादिपूर्ववत् वामनावतारप्रयोजनमाह छलय
सीत्यादि विक्रमणेपराक्रमे बलिंदैत्यं छलयसिवंचयसि श्रीकृष्णः वामनरूपं विधायबलेः
पदत्रयपरिमितांभूमिं याचयित्वा पश्चाद्ब्रह्मरूपं प्रकटीकृत्यबलिमधः क्षित्वाचतुर्दश भुव
नानिगृहीतवानितिपुराणप्रसिद्धेः छलयसीत्यनेन नायकस्यअनुनयचातुरीसूचितेतिभावः
बलिस्त्रिवल्यामसुरेबलिःपूजोपहारेकेबलिर्बलिष्ठ इतिवैजयंती अर्णोम्भस्तोयपानीय नीर
क्षीरांबुशंबरमित्यमरः वामनंकर्षके विष्णौवामनो नतिकारकः छलंकौतुकेप्रोक्तं छलंके
लिकलास्वपीतिरत्नकोषः ॥ ५ ॥

क्षत्रियरुधिरमयेजगदपगतपापं । स्नपयसिपयसिशमितभवतापं ॥ केशवधृतभृगुपतिरूप जयजगदीशहरे६॥

अतिदुस्सहतापोयंसमनींक्रीड़ामाह विभतरसमिति भृगवोरसिका रसिकानांपतिः प्रभुः प्रशस्तोभृगुपतिरूपः प्रशंसार्थेरूपः रसिकचूडामणे जयजगदीशादिपदं पूर्ववत् क्षत्रियरुधिर सदृशेपयसि जगत् स्नपयसि श्रीकालिन्दीजक्रीड़ायां कुंकुमकर्मिरितायां गच्छतीति जगन्नायिका समूहस्नपयसिस्नानं कारयसीत्यन्वयः कीदृशंजगत् व्रजयुवतिवृंदं अपगतपापं स्नानमात्रेणनष्टं संसारकलुषं पुनः कीदृशंजगत् युवतिवृन्दं शमितभवतापं शमितः शांतिं प्रापितः भवस्यकामस्य विरहोत्पन्नोतापोयेन भवोऽत्रकामवाचकः भीमोभीमसेन इतिवत् पक्षे परशुरामावतारंस्तौति धृतभृगुपतिरूपेति हेकेशव हे धृतभृगुपतिरूपधृतभृगुपतेः परशुरामस्यरूपंयेन तादृशजयपरशुरामावतार प्रयोजनमाह क्षत्रियाणां रुधिराणिप्रचुराणियत्रयस्मिन् कुरुक्षेत्राख्यतीर्थवरजले जगत्प्राणिजातं अपगतपापं नष्टंपातकं यथाभवति तथास्नापयसि स्नानंकारयसि कीदृशंजगत् शमित भवतापं शमितोनाशितो भवस्य संसारस्य तापोयत्र तादृशंअनेनतेजस्विता लक्षणेनायकगुणउक्तः रुधिरोंगारके प्रोक्तोरुधिरं कुंकुमासृजोरितिविश्वः पयस्यानीर क्षीरयोरित्यपिभवः संसारस्तातापेस्यात्तथा शंकरजातिष्विति धरणिः भवोजन्मनिप्रोक्तःभव कामइतिकीर्यैत इतिमेदिनीकारः ६ ॥

वितरसिदिक्षुरणेदिग्पतिकमनीयं । दशमुखमौलिबलिंरमणीयं ॥ केशवधृतरघुपतिरूपजयजगदीशहरे ७॥

सुप्रसन्नात्मिकाक्रीड़ामाह वितरसीत्यादिना हेकेशव हे धृतरघुपतिरूप जयराघवएकपत्नीपतय पतयस्तेषांपतिः श्रेष्ठस्तत्संबुद्धिः एतेनबहुयुवतिष्यासक्तिर्निवारितादि चुरतिविहारदिशासुरणे स्मरसंग्रामेदशमुखे दशप्रकारोयोमौलिकेशया सस्तेनबलिपूजां वितरसियद्वा दशमुखायकामायमौलिना किरीटरत्नेनबलिंपूजां विस्तरासिददासि इतिकेचित् कीदृशांदिग्पतिकमनीयं दिशांपतय इंद्रायस्तेषां कमनीयं मनोहरं तदभीष्टंवा तदगोचरमितिवापुनः किंभूतंरमणीयं रतिजनकंशेषंपूर्ववत् पक्षेरामावतारंस्तौति धृतिरघुपतिरूपेसति हेकेशव हेधृतरघुपतिरूप जयश्रीरामपुरुषार्थमाह वितरसीत्यादि रणेसंग्रामेदिक्षुआसासुदशमुखस्यरावणस्य येमौलयोमस्तकानि किरीटानिवातान्येव बलिंउपहारं वितरसिददासि कीदृशंदिग्पतिकमनीयं दिशांयेपतय इंद्रादयस्तेषांकमनीयं अभीष्टंतत्रहेतु रमणीयं मनोहरं अनेनदिग्पालाकांक्षितेन रावणवधेन गांभीर्यं लक्षणेनायकगुणउक्तः क्रियत्रमुकुटेमौलिःकेशेचसंपतेकरोपहारयोः पुंसिबलिःप्रत्यंगतोऽस्त्रियामित्यमरः ७ ॥

**वहसि वपुषि विशदे वसनं जलदाभं । हलहतिभीति मिलितयमुनाभं ॥ केशवधृतहलधररूप जयजगदीशहरे ॥ ८ ॥**

एवंरतिविहारगर्वितं मत्याह वहसीत्यादिना हे धृतहलधररूप हलविलेपनेधातुर्हलनं हलः विलेखनं नखक्षतादेः क्षतरूपं रतौ धत्ते इति हलधरः सुरतकेलिप्रशस्तो हलधररूपस्तत्संबुद्धिः धृतनानानखाधरक्षत प्रदरूपत्वं विशदे निर्मले वपुषि शरीरे वसनं वस्त्रं वहसि स्वांग सुंदरस्य वसनधारणं भारमतो धारयसीत्युक्तं कीदृशं जलदाभं जलदानां नीलमेघवृन्दानां शोभा यस्मात्तत् जलदस्याभिप्रायोयं जलदो यथास्वजीवनं दत्वा विश्वजीवनं करोति तथात्वमपि वेदोक्तं हित्वा विहारं कुरु नहि वेदोक्तमर्यादापालनेन सर्वोपरि रसः साधयितुं शक्य पुनः कीदृशं हलहतभीति मिलितयमुनाभं हलेन यदूननं भीत्या तद्भयेन मिलितायां यमुनातस्याभेवाभादीप्तिर्यस्य तत् हलहतीपावेस एवार्थः हलधरपदेन वीरललित लक्षणो नायकगुण उक्तः पक्षे हलधरावतारं स्तौति धृतहलधररूपेति हे केशव हे हलधररूपधृत हलधरस्वरूपं येन तादृश जयजय बलदेवस्य लीलामाह वहसीत्यादि विशदे कर्पूरपराग गौरे वपुषि शरीरे जलदाभं सजलनीलमेघस्निग्धमेव कं वसनं वस्त्रं वहसि धारयसीत्यन्वयः हलहतीत्यादि पूर्ववत् भीरूणां हि कंपउचित एवेति भावः कदाचिच्छ्रीवृंदावने वारुणीं पीत्वा व्रजांगनाभिः सह विहरता बलभद्रेण यमुना जलकेल्यर्थं माकारिता मत्तोयमिति श्रीकृष्णा ज्येष्ठोवेति मत्वांतिकं नायांतीं कृष्णां क्रोधेन हलाग्रेण कृष्टवानिति पुराणश्रुतिः हलधर शब्देन दुष्टनाशाय साधुरक्षणार्थं हलं धृतवानसीति सूचित गात्रं वपुः संहननं शरीरं वर्ष्म विग्रह इत्यमरः शुक्लः शुभ्रः शुचिः श्वेतविशदश्चेति पांडुरा इत्यमरः विशदं निर्मले प्रोक्तं विशदं कनकप्रभे विशदं प्रकटार्थेपि विशदं विमलाशय इति कोश चूडामणिः वस्त्रमाच्छादनं वासश्चैलं वसनमित्यमरः कर्षके स्याद्धलधरः प्रलंबघ्ने च नीरशो विकर्षणे स्मरकृते दारुण्यपि विकर्षण इति भोजे उत्प्रेक्षापूर्वकोऽयमलंकारः भीतिः साध्वंस कंपयोरिति विश्वप्रकाशः ॥ ८ ॥

**निंदसियज्ञविधेरहहश्रुतिजातम् । सदयहृदयदर्शितपशुघातम् ॥ केशवधृतबुद्धशरीर जयजगदीशहरे ॥ ९ ॥**

वेदोक्तमर्यादाग्रहं त्यक्त्वा विहरति पूर्वोक्तलब्दावरं तं मत्याह निंदसीत्यादिना हे केशव हे धृतबुद्धशरीर बुद्धं ज्ञातं श्रीवृषभानुरूपा यज्ञस्वरूपेन तादृश जयजगदीशादि पूर्ववत् हे सदयहृदय त्वं यज्ञविधेः मकरध्वजयज्ञविधेः अहहेति खेदे श्रुतिजातं तत्प्रतिपादकमर्यादामार्गं निंदसि मर्यादाभूतं मार्गं न मन्यसे नवेदस्त्वन्नियामक इत्यर्थः उक्तं चरति चक्रे वृत्तस्यनैवशास्त्रं न चक्रम इति भोजे कीदृशं दर्शितः पशुघातो येन पक्षे बुद्धावतारं स्तौति धृतबुद्धशरीरेति हे केशव धृतबुद्धशरीर धृतं बुद्धस्य शरीरं येन त्वं जय ननु बुद्धावतारे वेदनिंदकस्य बुद्धस्य मगकथ

मतिश्लाघाप्रसंगः क्रियतइत्यतआहचिंनिंदसीत्यादित्वंयज्ञविधेः यज्ञविधानस्यप्रवर्तकं श्रुतिजातंश्रुतिविभागंनिंदसिननुसर्वमित्यर्थः एतदर्थाविभावात् यदायदाहिधर्मस्येतिवच नात् किमर्थंसोपिनिंद्यतइत्याह दर्शितेतिअहहहेतिकथंदर्शितोबोधितः पशूनांघातोयेन तथाभूतंवेदोपिपशूनांघातंप्रथयति कथंत्वंनिंदयसि इतिभावः तथानिंदायांकारणमाह सदयेति दयाकृपातत्सहितं हृदयंयस्यतादृशसंबोधन यद्वासहृदयहृदयाः ब्राह्मणास्तेपांद र्शितः पशुघातोहननंयेन कथंनिन्दसिगवादिपशुघातंधिगिति तथावौधशास्त्रे अहिंसा परमोधर्मइतिअयमर्थःरागवशादज्ञानविलोक्याग्नीषोमीयंपशुमालभेतेत्यादिस्वर्गजाति फलविधिवाक्यैः प्ररोचनयातान्गुरुलड्डुकवत्प्रवृत्त्यश्चानिरपराधवधसाध्यं नानाप्राणि वधं स्वर्गजादिफलं नश्वरंविचार्य परमपुरुषार्थेश्रीकृष्णभजनेतान् प्रवर्तयितुंनहिंस्यात्स र्वभूतानीत्यादिनायज्ञबोधकस्यवेदस्यनिंदांकरोषि ननुसर्वथावेदनिन्दायांप्रवृत्तेसति ता त्पर्यासिद्धांतमज्ञात्वाज्ञानां वेदमार्गेश्रीकृष्णभजनेवाऽविश्वासस्तेषांमोहनायतवावतार प्रयोजनमिति जगदीशादिपदंपूर्ववत् बुधशरीरेत्यनेनदयालक्षणोनायकगुणउक्तः वेदे श्वसिच ॥ ९ ॥

**म्लेच्छनिवहनिधनेकलयसिकरवालम्।धूमकेतुमिवकिमपिकरालम्॥केशवधृतकल्किशरीर जयजगदीशहरे १०**

पूर्वोक्तविहारयुष्टं प्रत्याह म्लेच्छेत्यादि हे केशव हेधृतकल्किशरीर धृतंसापराधश रीरंयेन तादृश जयजयशेषं समानंत्वं म्लेच्छनिवह निधनेकरवालं कलयसि म्लेच्छ अव्यक्तेशब्दे म्लेच्छस्याव्यक्तकूजनस्यानिवहः समूहस्तस्यनिधने विरामेखड्गं खड्गवदति करालं तीक्ष्णं नखंकलयसि ददासिपक्षे कल्क्यवतारं स्तौति धृतकल्किशरीरेति हेके शव धृतं कल्किनः शरीरंयेन तत्संबुद्धिः त्वंजय जयजगदीशादिपदं सर्वत्रयोज्यं ननुपूर्व मम सदयत्वं कथितं तद्विपरीतप्राणिवधे प्रवर्तस्येत्यतत् आह म्लेच्छेति म्लेच्छसमूह मारणार्थं किमपि करालमतिभयंकरवालंखड्गं कलयसिधारयसि एतेनधर्मसंरक्षण परिपालनेन दृढ़त्वलक्षणोनायकगुणउक्तः कमिव धूमकेतुमिव औत्पातिकग्रहमिव औ त्पातिकमुदितंग्रहं दृष्ट्वाम्लेच्छानांनाशोभवतीति करवालस्यधूमकेतु औत्पातिकग्रह उदितेप्राणिनां दुःखः स्यादिति भावः यद्वाधूमकेतुश्चिह्नं यस्यसः धूमकेतुः वह्निस्तमिव खड्गस्य नीलत्वाद्धूमसादृश्य मुष्टेश्चकनकमयत्वादाग्निसाम्यं म्लेच्छनिवहनिधनइतिनि मित्ते सप्तमी । चर्मणि द्वीपिनंहंतीतिवत् म्लेच्छः पापरतौजातिभेदे स्यादल्पभाषिणि हर्षापहारकेन्वैवसआचारोज्झिते पिचेति कोशचूडामणिःकल्कीतुसापराधःस्यात्कल्की विष्णुर्मलान्वित इतिभोजेधूमकेतुः स्मृतौवह्नावुत्पातग्रहयोरितिविश्वः समूहनिर्व्यूह इत्यमर निधनंस्यात्कुलेनाशइति विश्वप्रकाशः खड्गेतुनिस्त्रिंशचंद्रहासास्यार्ष्टिये कौक्षेप कोमण्डलाग्रः करवालाकृपणेचेत्यमरः करालोभीषणेन्यवदितिचवस्तपमालङ्कारः १०॥

**श्रीजयदेवकवेरिदमुदितमुदारम् । शृणुसुखदंशुभदं भवसारम् ॥ केशवधृतदशविधरूप जयजगदीशहरे॥११॥**

सर्वलीलाकर्तारंपूर्णं श्रीकृष्णंस्तौतिश्रीति हेरसिकश्रीजयदेवकवेः इदंगीतंउदितं स्वतः प्रेम्णास्फुटीकृतं शृणुकीदृशंउदारं महद्रसमयत्वात् अथवाउदारंअतिरमणीयं श्रीराधाकृष्णकेलिनिरूपणत्वात् पुनःकीदृशंसुखदं सकलानंदपूर्णत्वात् पुनःकीदृशंशुभदं अथवाशुभंददातियः कृष्णस्तत्पदंभवसारं भवेसारंसारभूतं यद्वाभवोमनोभवः कामस्तस्यसारं शृंगाररसपूर्णं यद्वाभवत्यस्मादितिविश्वसंभवः श्रीकृष्णस्तस्य सारं सारभूतं सुरतिविस्तारकंहेकेशव हेधृतदशविधरूप धृतानिदशविधानि दशप्रकाराणि मीनवंधानि शरीराणि येनतादृशजयजयपक्ष कृष्णदशावतारं श्रीकृष्णंस्तौति हेकेशवहेधृतदशविधरूप धृतानिदशविधानि दशप्रकाराणि मीनाद्यवतारूपाणियेनतादृशस्त्वंजयजय अथवा दशविधैरवतारैरूप्यतइति शेषंसमानंउदारंसुन्दरंप्रोक्तमुत्कृष्टंपूजितंतथेति त्रिलोचनःरूपंप्रशस्ते रम्येवेतिचूडामणिः ॥ ११ ॥

**वेदानुद्धरतेजगन्तिवहतेभूगोलमुद्बिभ्रते दैत्यंदारयते बलिंछलयतेक्षत्रक्षयंकुर्वते ॥ पौलस्त्यंजयतेहलंकलयतेकारुण्यमातन्वते म्लेच्छान्मूर्छयतेदशाकृतिकृतेकृष्णायतुभ्यंनमः ॥ १ ॥**

पूर्वकथितंलीलासमूहं श्रीकृष्णचंद्रविषयं प्रथयन्प्रणमति वेदानित्यादिना श्रीकृष्णाय दशाकृतिकृतेतुभ्यंनमः इत्यन्वयः पूर्वोक्तादशविधा दशप्रकारा मीनवंधादिलीलाकृतिं करोति तस्मै दशाकृतिकृते कृष्णायेति पूर्णाय नराकृतिपरब्रह्मणे वा उक्तंच ॥ कृषिर्भूवाचकः शब्दोनश्च निर्वृत्तिवाचकः । तयोरैक्यंपरंब्रह्म कृष्णइत्यभिधीयत इति ॥ किंभूताय वेदान् वात्स्यायनादिशास्त्रोक्त बंधादि कामप्रकारानुद्धरते लोकेषु विस्तारयते अन्यथा वात्स्यायनशास्त्रंनिःफलमेवात्र स्यात् पुनः कींजगद्युवति समूहं निवहति विगत संतापं कुर्वते पुनर्भवतीति भूः कामस्तस्यगोलः समूहस्तं बिभ्रते धारयते रासेत्र भूमंडलं वा रासलीला प्रतिबंधकत्व समीपमागतं शंखचूडाख्यं दैत्यं दारयते विदारयते अनेन रसैकप्राधान्यमुक्तं पुनः बलिंपूजां छलयते ब्रजयुवतीनां कामजनित नखक्षतादिप्रदानेन वंचयते पुनः कीदृशं क्षत्रक्षयं कुर्वते क्षत्रशब्देनात्र क्षत्रसहचरितो वीररसोलक्ष्यते तस्य क्षत्रस्य क्षयं विनाशं कुर्वते एतेन सुरते शूरत्वं ध्वन्यते पुनः कीदृशं पौलस्त्यं जयते पौलमहत्वेधातुः पुलनं पुलः महत्वं तस्यसमूहः पौलं तस्यसमूह इत्य

णु पौलस्त्यायतं संहतं भवत्यस्मिन्निति पौलस्त्यो ब्रह्मानन्दः ष्टैशब्द संघातयोरिति धातुस्तमपि जयते अत्यन्तकुर्वते हलंकलयते हलविलेपणेधातुः हलनं हलः विलेपणं न खननादि तत्कुर्वते कारुण्यमातन्वते सद्भक्तेषु कृपां विस्तारयते म्लेच्छमव्यक्तं भाषणं म्लेच्छ अव्यक्ते शब्दे इतिधातुः अव्यक्तो श्वाससीत्कारान् मूर्च्छयते वर्द्धयते मूर्च्छामोहसमुच्छ्रापयो इतिधातुःपक्षे १ श्रीकृष्णकृतां वंशादिलीलां स्तुत्वांशावतारिणः सच्चिदानन्दरूपं परिपूर्णविग्रहं श्रीकृष्णचंद्रं गीतार्थश्लोक संग्रहेणस्तौति वेदानित्यादिना कृष्णाय नराकृति परब्रह्मणे तुभ्यंनमः नमस्करोतु ननुमीनाद्यवतारेण तस्य पूर्णस्यस्तुतिः कृतैवेदानीं नंदगोपकलकं मांकथं स्तौषीत्यतआह दशाकृतिकृते आकृति कथितारूपे सामान्यवपुषोरपीति विश्वः मीनादि दशांश रूपकर्ते अंशावतार वानीश्वरस्त्वमेवेत्यर्थः ननुकुतोहमीश्वरः कुतो ममांशा एते तत्राह पूर्णत्वा उक्तंच भागवते अन्येचांशकलाःपुंसःकृष्णस्तुभगवान्स्वयमिति किंच कृपिभूर्वाचक इतिनतुपूर्णरचेदहं कुत्सितामीना त्वतयः किमिति स्वीकृता इत्याशयेनावतार प्रयोजनमाह वेदानुद्धरते वेदोद्धरणं कुर्वते मीनशरीरणी पुनःकीदृशं जगन्निवहते भुवनंधारयते कच्छपदेहेन पुनःकीदृशपदंसर्वत्रयोज्यम् भूगोकुलंधरामंडलं उद्बिभ्रते ऊर्ध्वंप्रापयते शूकररूपेण दैत्यंहिरण्यकशिपुंदारयते विदारयते नृसिंहरूपेण नखैः बलिंदैत्यं छलयते प्रवंचयते वामनरूपेण क्षत्रक्षयंकुर्वते दुष्टक्षत्रियाणां विनाशंकुर्वते परशुरामरूपेण पौलस्त्यं रावणंजयते श्रीरामचंद्ररूपेण हलंकलयते दुष्टनाशाय हलंधारयते श्रीबलदेवरूपेणकारुण्यमनुग्रहमातन्वतेविस्तारयते बुद्धरूपेण म्लेच्छान्मूर्च्छयते नाशयतेकल्किरूपेण एतेन श्रीकृष्णदेवस्यांशावतार प्रयोजनान्युक्तानिदीपकालंकारः ॥ १ ॥

जयदेववर्णितदशावतारवर्णनोनाम प्रथमःप्रबंधः ॥ १ ॥

## गुर्ज्जरीरागेप्रतिमठताले ॥

**श्रितकमलाकुचमंडलधृतकुंडलए ॥ कलितललित वनमाल जयजयदेवहरे ॥ १ ॥ ध्रुपदं ॥**

एवंपूर्वोक्तकेलिप्रतापवर्णनेन दशाकृतिकृते कृष्णायेति यत्प्रोक्तं तदेवगोप्यांतर क्रीड़ाकथनेनदर्शितं इदानींसकलनायकचूड़ामणेः श्रीकृष्णचन्द्रस्य समस्तनायक कलाविशेषान्वर्णयितुमपिच ब्रजवध्वः स्वयूथकेलिंकारयितुं श्रीकृष्णंनायकगुणकदंबत्वेन स्तुवंतीति मङ्गलानंतरं श्रितकमलेतिगीतेन दर्शयति गीतस्यास्य गुर्ज्जरीरागः रागलक्षणं ॥ श्यामासुकेशीमलयद्रुमाणांमृदूल्लसत्पल्लवतल्पयाता श्रुतेःस्वराणांदधती विभागं तंत्रीमुखाद्गुर्ज्जरीयमिति ग्रन्थबाहुल्यभयात्तालक्षणंनोक्तं गीतस्यायमर्थः हेदेवकंदर्पद्योतक हे हरे सकलजनमनोहर जयजयस्वकेल्यर्थं नायकोत्कर्षमाविःकुरुकुरुआदरे द्विवचनं इदं

ध्रुवपदं नायकगुणानाह श्रितेति पुनः कीदृशः हे श्रित कमलाकुचमंडल श्रिता आश्रिता स्त्रसौभाग्यसौंदर्यमाधुर्येति समर्थ वरश्रीः लक्ष्मीजायामाश्रित कमला लक्ष्मी श्रीराधा तस्याः कुचयोः मंडलं समग्रकुचप्रदेशोयेन तत्संबुद्धिः श्रितंराधाया कुचमंडमंडमस्येति वा कमुकांताविति वा कांतिलातिआददाति साकमलाराधा गौर पीन स्निग्धवर्तुलत्वात् तत्सौभाग्यशोभाप्राप्त्यर्थं यां लक्ष्मीर्विरश्चीरचसेवत इतिभावः अनेनालौकिकोत्तरनायिक गुणउक्तः पुनः कीदृशः धृतकुंडलएधृते स्वीकृते पुष्पनिर्मिते वा कुंडले कर्णाभरणे येन तत्सम्बोधनं ए इत्यतिहर्षे अनेन पूर्वक्रीडायां तद्विस्मृतमित्युक्तं पुनः कीदृशः कलितेति कलिताकंठेधृता इतिमनोहरावनमालाः पादलंबिनीरत्नमयी दावेन कलितानि ललितानि मनोहराणि शृंगारविलासरसवेष्टितानियस्यां तादृक्विधावनमाला यस्येति अथवाकलि ताधृतारासस्खीनां स्वेदोत्पन्ना वनस्यमालापंक्ति यस्मिन् अथवा कलिता धारिता रास सरस महोत्सव व्रजवल्लवीभिर्ललिता कुंकुमकर्पूरागुरु सुगन्धादिभिर्मनोहरा वनमाला यस्य अतः नृत्यतेखेदोत्पन्न श्रमजलबिंदुक्लिन्नामपिमालां प्रेयसीभिदत्तेयं मत्वा रसिक त्वभावात्नत्यजतीति भावः उक्तंच प्रियेणसंग्रन्थ्य विपक्षसन्निधावुपाहितां वक्षसि पीव रस्तने स्रजं न काचिद्विजहौजलाविलां वसंतिहि प्रेम्णि गुणानवस्तूनीतिभारविः अनेना थका खिलविलाससंपत्प्रिया कौशलंचोक्तं पक्षे श्रितमाश्रितं कमलायाः लक्ष्म्याः कुचयो र्मण्डलं कुचाग्रभागोयेन तत्संबुद्धिः अनेन लक्ष्म्याःकेलिकौशलेनरति केलिकौशलरूपो नायकगुणउक्तः लक्ष्म्याश्रयत्वेनधनाढ्यगुणः सूचितोनायकस्यधृतकुण्डलकलित ललित वनमालेति पदद्वयेन नायकस्यभव्यत्वं सौभत्वंच सूचितमितिशेषंसमानं मण्डलंराजचक्रं स्यादिंबेवस्त्र मंडलेकासा कुचप्रदेशो मण्डलंवर्तुलेचेतिविश्वः कुचौस्तनावितिवा आ पादगामिनीमालां वनमालांविदुर्बुधा इतिविश्वः कमला श्रीवरस्त्रियोरितिविश्वः ॥ १ ॥

## दिनमणिमंडलमंडनभवखंडनए ॥मुनिजनमानसहंस जयजयदेवहरे ॥ २ ॥

कर्तव्यव्रजयुवतिकदंबलीला प्रवकान्नायकंगुणानाहुर्दिनमणीत्यादिनाएइतिसादरसं बुद्धौदिनस्यमणिः प्रकाशकः सूर्यः मणेः प्रकाशबहुलत्वंसिद्धमेवतस्ययन्मंडलंप्रकाशक समूहस्तस्यमंडलंश्रीराधासौंदर्यतस्यतादृश श्रीराधालंकारभूतएतेननायिकापक्षपातोध्व नितः पुनः कीदृशः हेभवखंडनभवस्य कंदर्पस्यखंडननाशकतत्संबोधनं कीदृशः मुनिजन मानसहंस मुनिजनास्तत्वचरणकमलसुभगासौंदर्यमाधुर्यविचारशीला गोपीजनास्तेषांम नस्मेव सरस्तत्रहंसमराल प्रसिद्धेमानससरसिहंसास्तिष्ठंत्यत्रमानसरोत्ररसदृशगोपीमन सि श्रीकृष्णचंद्रोहंसतुल्य इतिभावः अनेनमनोहारित्वंमोक्षंपक्षेदिनमणेःसूर्यस्यमंडलंते जः समूहस्तस्यमंडन अलंकारभूतभवंसंसारं खंडयतिनाशयतीतितादृशएतेननायकस्यगु

णसामर्थ्यंध्वनितं पुनः मुनिजनानामृषीणांमानसंचित्तमेवसरः सरोवरस्यहंस अनेन नायकधूर्तादिरहितत्वंस्वच्छहृदये प्रकाशत्वंचोक्तंशेषंजयादिपदं समानंमानसंसरसिस्वांत इतिविश्वः हंसोविहंगमेपिस्यात्परमात्मनियोगिनीतिच मंडलंतुसमूहेस्यान्मंडलंराजमंडले मंडलंवर्तुलेचैव तेजस्यपिमंडलमितिमेदिनीकारः परंपरिचितरूपकालंकारतद्रूपंनियतारोपणोपायः स्यादारोपः परस्यपः तत्परंपरिचितोक्तिष्टेवाचकेभेदभाजिचेति ॥ २ ॥

**कालियविषधरगंजनजनरंजनए ॥ यदुकुलनलिनदिनेश जयजयदेवहरे ॥ ३ ॥**

अन्यदप्याहुः कालियेत्यादिना कालियःसर्पस्तद्वदाकृतिः कुंडलीभूतो बंधस्तस्यगंजनमर्दक बंधलक्षणंचोक्तं यत्रोपरिरिस्थितापुंसः कांतालिंगनलालसा वेष्टयत्यंगमंगेनभोगिबंधः सकथ्यत इति हेजनरंजन जनान्भक्तान् स्वकौशलादिना रंजयति एतेनालौकिकगुणोनायकस्य लक्षितइति नहिसर्वेजनमल्पसामर्थ्येनरज्यते अथवाजनःश्रीराधासखीजनःवाममाधुर्यादिनारंजनरतिप्रद एतेननायिका दक्षमवणत्वमनुकूलत्वं चमोक्तं हेयदुकुलनलिनदिनेश यदुकुलंनामगोपकुलमेव नलिनंतस्यदिनेश सूर्यएतेन कुलीनसर्वं प्रकाशनायकगुणोलक्षितःउक्तंच पद्मपुराणे ॥ यादवानांहितार्थायधृतोगोवर्द्धनाचल इतिपक्षे पुनःकीदृशः हेकालियविषधरगंजन कालियनाम्नोविषधरस्य सर्पस्यगंजनगर्वनाशक अनेनापि क्लेशहारित्वमुक्तं हेजनरंजनान् गोवर्द्धनोद्धारणादिना मधुरसंभाषणादिनाचरंजनसुखप्रद अनेनक्लेशरक्षणत्वं शुभवचनत्वंच नायकगुणउक्तः यादवानांकुलमेव नलिनंकमलं तस्य दिनेशसूर्यएतेनकुलीनत्वं यादवसौभाग्यंचोक्तं आशीविषोविषधरश्चक्रीव्यालः सरीसृप इत्यमरःवापुंसिपद्मं नलिनमरविंदं महोत्पलमितिच उत्प्रेक्षोपमालंकारअन्यत्समानम् ३॥

**मधुमुरनरकविनाशनगरुडासनए ॥ सुरकुलकेलिनिदान जयजयदेवहरे ॥ ४ ॥**

अपरमप्याहुर्मधुमुरेत्यादिना एइति सर्वत्रानंदसंबोधनं ज्ञातव्यं मधौवसंते येमुरा मुरवेष्टनेधातुः अभिमतार्थप्रदा वृक्षाः नराणां कंसुखं याभ्यस्तालतास्च येचयः पक्षिणस्तानपि न आश्रयति व्यापारयतीति नाशन तादृश अशुभोजने अशुभव्यापारे निषेधार्थ नकारः समासत्वान्नलोपाभावो नैकधेतिवत् स्ववंशीरवं श्रृण्वतां तरुलता पक्षिणोभोजन भोगतृष्णाव्यापारं हतवान् किंपुनः मनुष्याणामिति भावः हेगरुडासन हेगरुडबंधन उक्तं कामसर्वस्वे कोकशास्त्रे तल्लक्षणं पक्षवद्वाहुयुगलं विपरीतरते प्रिया धुनोति यत्र कूजंती सप्रोक्तो गरुडाकृतिरिति हेसुरकुलकेलि निदान देवानां कुले केलीनांनिदान आदिप्रवर्तक नितरांरसप्रद इतिवा यमपेक्ष्य सुरकुलस्य केलीस्पृहा भवतीति

भात्रः पक्षे मधुनाम्नो मुरनाम्नो नरकनाम्नो दैत्यस्य नाशक सुरकुलकेलीनां देवकुल स मूहक्रीड़ानां निदान आदिकारण तदुद्भवकारक इतियावत् अनेन नायकस्य देवक्रीडा विशिष्टसौंदर्यकुशलादयश्च गुणा उक्ता मधुवसंते मधुरे मधुन्यपि सुरेत्येति मेदिनीकारः सुरो सुरेश स्वजनाभिमतार्थप्रदेपि चेति वैजयंती कल्याणि सुखे वापि जले अश्वाडियेति च सुरोदेवइत्यमरः निदानंत्वादि कारणं वेतिच निदानं कारणे प्रोक्तं विनाशे नि श्चये चेति ॥ ४ ॥

## अमलकमलदललोचनभवमोचनए ॥ त्रिभुवनभव ननिधान जयजयदेवहरे ॥ ५ ॥

अपरमप्याह्रः अमलकमलेत्यादिना अमलं यत्कमलस्यदलं पत्रंतद्वल्लोचने यस्य तादृश निर्मलकमल केशरक्तपत्रलोचन इत्यर्थः अनेननायिकांतरसं भोगमालिन्यं नि रस्तं भवमोचन कामसंतापनाशक त्रिभुवनभवनं यस्य श्रीराधारमणस्य तस्य निधान निधिविशेष एतेननायक गुणोत्कर्षः प्रतिपादित । पक्षे अमलंयत्कमलं तस्ययद्दलं पत्रं तद्वल्लोचनेस्य अनेनापिमनोहारित्वंप्रोक्तं भवस्यसंसारस्य मोचन निस्तारक अथवा भवं जन्म तस्माद्भक्तान्मोचयतीति तादृश अनेनत्यागरूपो नायकगुणउक्तः त्रिभुवनमेवभव नंमंदिरं तदेवनिधानंवसतिस्थानंयस्य तादृशजयादि पदमुभयत्रसमानं निधानंस्वातयो निधावपीति विश्वः भवनं भाववेश्मयोरितिच पत्रं पलाशं छदनं पर्णच्छद इत्यमरः निधानमाकरे प्रोक्तं निधिभेदे स्थितावपीति कोषसमुच्चये अत्र स्तुतिरलंकारः ॥ ५ ॥

## जनकसुताकृतभूषणजितदूषणए ॥ समरशमितदश कंठ जयजयदेवहरे ॥ ६ ॥

अपरमप्याहुर्जनकेत्यादिना जनकसुताकृतभूषण जनानांकंसुखंजनयतीति जनको वृषभानुस्तत्करोतीति पचादित्वात् तस्यसुता श्रीराधातयातस्यांवा कृतानिमकरंदिका पत्रतिलकादीनि भूषणानियस्ययेनवा जनानांस्वसखीजनानांकं सुखंसुनोतीति जनकसु ताराधातयावा पुष्पाणिप्रसवे जितानि स्वगुणश्लाघाकथन नायिकोपरतिप्रभृतीनिदूष णानियेन हेसमरशमितदशकंठ समरेरतिसंग्रामे शमितानाशिता दशकंठा मुखशून्यद शावस्थायेन ता दशताः पुनर्दशचक्षूरागः प्रथमंचित्तासंगस्ततोऽथसंकल्पः निद्राछेदस्त नुता विषयनिवृत्ति त्रपानाशः उन्मादोप्यथ मूर्च्छास्मृतिरप्येता दशावस्थाः एतैःस कलकलाप्रवीणधीरादयश्च नायकगुणा उक्ताः पक्षे पुनः कीदृशः जनकसुताकृत भूष ण जनकसुतायाःसीतायाः कृतानि भूषणानि येन जनकसुताया वा कृतं भूषणं यस्मि न् एतेन तारुण्यसकलकलाप्रवीण नायकगुण उक्तः पुनः कीदृशः जितो दूषणनामा

राक्षसो येन अथवा जितानि स्वस्मिन् श्लाघा तिरस्कारादीनि दूषणानि येन अनेन नायकस्य शूरगुणो लक्षितः पुनः समरे संग्रामे शमितो नाशितो दशकंठो रावणो येन तत्तथा अनेनाभि मानीक्त गुणाप्रोक्तः जनकः स्यात्तुपितरि सुखदे मिथिलेश्वर इति त्रिलोचनः दूषणोराक्षसेप्रोक्तं दूषणं खंडनेपिच समरानीक इत्यमरः ॥ ६ ॥

## अभिनवजलधरसुंदरधृतमंदरए॥श्रीमुखचन्द्रचकोर जयजयदेवहरे ॥ ७ ॥

अपरमप्याहुरभिनवेत्यादिनाहेअभिनवजलधरसुंदर नूतनप्रकटितास्निग्धवीरदद्युते जलदोयथाग्रीष्मसंतापहारकः सकलानंदप्रदश्चतथात्वंधृतमंदरधृतोगोवर्द्धनगोपसंरक्षणार्थायधृतोयंमंदराचलइतिपद्मपुराणे किंचमंदराचल इतितन्नामांतरं अथवाधृतपर्वतस्य तल्लक्षणंयथाहुर्नैकेनवनितां कांतोपमानुरागिनी दधात्यूर्ध्वंगिरिमिवगिरिबंधःसकीर्तित श्री मुखचंद्रचकोर श्रीसंयुक्तंयच्छ्रीराधामुखंतदेवानंदजनकत्वेनचंद्रस्तस्यचकोरतदापअजीव अत्रश्रीराधाधरचंद्रामृतपानत्वे श्रीकृष्णचंद्रस्यचकोरपक्षित्वंनिरूपितं श्रीमद्वृंदावनेश्री राधामुखमेवचंद्रोनापरश्चंद्रोविराजत इतिअनेनश्रीमद्वृंदावननायिकामुत्कर्षपक्षे पुनः कीदृशः अभिनवेति अभिनवोनूतनो जलधरोमेघस्तद्वत्सुंदर शुभगअनेननायकस्यरतिगंभीरस्निग्ध भव्यत्वंचोक्तं धृतक्षीराब्धिमथनावसरेमंदराख्यः पर्वतोयेन अनेनापिनायक सामर्थ्यमुक्तं श्रीमुखेति श्रिया लक्ष्म्या राधाया मुखमेव चंद्र आह्लादय कारित्वात् तस्य चकोर अत्रेंदिरावदनचंद्राधरपानेन भगवतश्चकोरत्वं निरूपितं एतेन नायकरति कौशलमेवोक्तं प्रत्ययोभिनवो नवीनो नूतनो नव इत्यमरः धाराधरो जलधर इत्यपि मन्दरो मन्दरेप्रोक्तो बंधभेदेपि मन्मथ इतिमेदिनीकारः नायकगुणलक्षणत्यागी कुलीनः कुशलोरतेषुकल्पः कलाविस्तरणो धनाढ्यः भव्यः क्षमावान् सुभगोऽभिमानी स्त्रीणांगत इति श्रृङ्गारतिलके अत्रस्तुतिरेवालंकारः ॥ ७ ॥

## तवचरणेप्रणतावयमितिभावयए ॥ कुरुकुशलंप्रणतेषु जयजयदेवहरे ॥ ८ ॥

सकलकलाप्रवीणत्वेन श्रीकृष्णंस्तुत्वासांप्रतमभिमतमाहुः तमभीष्टंचप्रार्थयंति तवेत्यादिना हेकृष्णवयं तवचरणेप्रणता इति भावयस्मरजानीहि इतियावत् ननुमया किमितिभवत्यःस्मर्तव्याःअयमर्थःस्मरणं चित्तधर्मस्तस्य त्वन्निष्ठत्वात्त्वयैवतद्विधेयमिति सूचितं अथवा त्वमेवनिज चरणप्रणतान्स्वभक्तान्भावयकुर्वित्यर्थः प्रणतेष्वस्मासुकुशलंकुरुत्वय्यनुराग अन्यत्रविरतिश्चेतिभावः तवचरणस्मरणमेवास्मासुकुशलं तदितरमकुशलमेवेति सूचितं पक्षेवयं तवचरणे पतिता इतिभावय जानीहि ननुमया तत्ज्ञातमेव तावत्ताभवतां किमिष्टं कर्तव्यमित्यत आह कुर्विति प्रणतेषु शरणागतेषु कुशलं कुरु ८ ॥

श्रीजयदेवकवेरिदंकुरुतेमुदम् ॥ मंगलमुज्ज्वलगीतं जयजयदेवहरे ॥ ९ ॥

एवमुक्ताभीष्टमाशास्तेश्रीजयेति इदंश्रीजयदेवकवेः इदंकृतंव्रजयुवति गीतमङ्गलवि धानं सद्भक्तेमुदं कुरुते कुरुतामितिव्यक्त्येकुरुत इतिसाक्षादनुभवाद्वर्तमानतोक्ता कीदृशं मङ्गलंसुरतमङ्गलप्रदं कीदृशं उज्ज्वलगीतं उज्ज्वलादोषरहिता गीतिगानं यस्यतत् तथा श्रीराधाकृष्णसुरतकेलिकथनेनोज्ज्वल नत्वंतदितरकेलिवर्णने मालिनत्वमेव शृंगारस्यापि वेतिभावः पक्षे श्रीजयदेवकवेः इदंगीतं शृण्वतां पठतां वामुदं आनन्दंकुरुते कीदृशं मङ्गलं मङ्गलप्रदं उज्ज्वलं गीतं उज्ज्वलालङ्कारादि दोषरहितं गीतं कवित्वंयस्य गीतंदोषास्तुभरतो शंकितं भीममुद्भ्रांतमव्यक्तमनुनासिकं काकस्वरं शिरःकम्पतथास्थानविवर्जितं विस्वरं विरसं चैव विश्लिष्टं विषमाहतम् व्याकुलं तालहीनंच गीतदोषान् विदुर्बुधाः मुत्प्रीतिः प्रमदोहर्ष इत्यमरः शृंगारः शुचिरुज्ज्वलइत्यपि ॥ ९ ॥

पद्मापयोधरतटीपरिरंभलग्न काश्मीरमुद्रितमुरोमधुसूदनस्य ॥ व्यक्तानुरागमिवखेलदनंगखेद स्वेदांबुपूरमनुपूरयतुप्रियंवः ॥ १ ॥

एवंपूर्वोक्तप्रकारेण श्रीराधाकृष्णयोः रहक्रीडावर्णिताः इदानीं तत्पुष्टिकारिणीं लीलाभूमिकामाह संभोगरस पुष्ट्यर्थं विप्रयोगनिरूपणमिति पूर्वमुक्तमेव विप्रयोगात्मिका केलिः प्रथमे संनिरूप्यते संभोगरस पुष्ट्यर्थं प्रेमवाक्यैव यस्य या तत्रापि श्रीराधोत्कर्षेनाय पृथक्लीलामाह पद्मेत्यादिना मधुसूदनस्य श्रीराधाधरामृतपानकर्तुः पुनःश्रभिषवे उरो वक्षस्थलं वो युष्माकं प्रियं नोभीष्ट मनुपूरयतु संपूर्णंकरोतु कीदृशं पद्मानि क्रीडार्थं विधंते यस्यां पद्मवर्णा वा पद्मांकिता समुद्रशास्त्रोक्ता महासौभाग्यवती वा पद्मा श्रीराधा तस्याः पयोधरतटी कुचाग्रे तस्य परिरंभेणालिंगनेन लग्नं यत्काश्मीरं कुंकुमं तेन मुद्रितं चिह्नितं संजातमुदं वा श्रीराधयास्वप्रे मदर्शनाय निजस्तनाग्रलिप्त काश्मीरेण मुद्रेव दत्तेतिभावः खेलनेन विनोदेन नंगक्रीडायां यः खेदः सुरतायासस्तेनयन यत्स्वेदांबुप्रस्वेदजलं तस्य इशः प्रवाहो यत्र तादृशं कीदृशमिव व्यक्तानुरागमिव व्यक्तः प्रगटीभूतोनुरागः स्नेहो यत्र तादृशमिव अनेन श्रीराधानुरागाधिक्यात्स्नेहः कुंकुम रागव्याजेन बहिर्निर्गत इतिभावः पक्षे पद्मालक्ष्मीः मधुसूदनो मधुदैत्य हंता शेषं समानं पद्मालक्ष्मीः स्मृता पद्मा पद्मचिह्नापि कामिनी काश्मीरं कुंकुमे प्रोक्तमिति अनेन दाक्षिण्य रूपोनायक गुण उक्तः तल्लक्षणं शृंगारतिलके यो गौरवं भयं प्रेमसद्भाव पूर्वयोषिति नमुंच त्यन्यचित्तोपि ज्ञेयो सौ दक्षिणो यथा शेषोक्तिरलंकारः ॥ १ ॥

वसन्तेवासन्ती कुसुमसुकुमारैरवयवैर्भ्रमन्तींका न्तारे बहुविहितकृष्णानुसरणाम् । अमंदंकन्दर्पज्वरजनितचिन्ताकुलतया चलद्बाधांराधां सरसमिदमूचे सहचरी ॥ २ ॥

पूर्वोक्त श्लोकेन केलिरस सांद्रमुक्त्वा तद्विधायिनी वासन्तीनाम्नी कामुक्यपि सहचरि सरससहित मनुनयसहितं वा यथा भवति तथा वसन्तसमये राधामिदमूचे सहचरी लक्षणं स्वात्मनोप्यधिकं स्नेहं कुर्वाणान्योन्यमक्षयां विश्रंभिनी वयो वेषादिभिस्तुल्यासखीमतेति वासन्ती माधवीलता तत्कुसुमवत् सुकुमारैः कोमलैरवयवैः कपल्लवितापुनः किं कांतारेवने भ्रमन्तीं इतस्ततो गच्छन्ति श्रीराधा विशेषणं वा भ्रमंतीमित्यत्र हेतुगर्भं विशेषणं बहुवारंकृतं श्रीकृष्णस्यानुशरणमन्वेषणं यथातां अन्वेषणे हेतुः पुनः कीदृशीं अमंदं अधिकं यथास्यात्तथा तथा कंदर्पस्य कामस्य ज्वरस्तापस्तेन जनिता उत्पादिता चिंतातया आकुलतया कुलत्वेन चलद्बाधां वलंतीं प्रसरंती बाधादुःखं यस्यास्तं श्रीकृष्णविरहातुरत्वेननच जीविष्यसीति भावः महारण्ये दुर्गपथे कांतार इत्यमरः पीडावाधा व्यथादुःखमित्यपिच अवयवैरित्यत्र जटाभिस्तापस इतिवत् वासन्ती माधवी लतेत्यमरः ॥ २ ॥

वसन्तरागे यतितले ॥

ललितलवङ्गलतापरिशीलन कोमलमलयसमीरे ॥ मधुकरनिकरकरंबितकोकिल कूजितकुञ्जकुटीरे । विहरतिहरिरिहसरसवसन्तेनृत्यतियुवतिजनेन समंसखिविरहिजनस्यदुरंते १ ॥

वसन्तरागे यतितालोरागलक्षणम् शिखंडिवर्हौचयबद्धचूडः पुष्णन्पिकं चूतलतांकुरेण भ्रमन्मुदावासमनंग मूर्तिमतोमतंगस्य वसन्तरागः ताललक्षणम् लतौपत्रतलौयतितालः सकथ्यते सरसिमिहमूच इति श्लोकोक्तं प्रपञ्चयति ललितेत्यादिना गीतेन हेसखिराधे इहराधे वैशाखेवा हरिर्मीनोहरो नंदसूनुर्विहरति विरहंकरोति इहविहरतीतिसमक्षं दर्शयति नहिविहरे उरतोदर्शनं संभवतीतिभावः तत्रापिनैको विहरति किंतु युवतिजनेन व्रजवधूसमूहेन समंसहनृत्यति नृत्यंकरोति अनेनव्रजयुवती यूथलीलाप्रोक्तेतिभाव· कीदृशेइहसरसवसंते शृंगाररससहित वसंतसमये पुनःकीदृशे विरहजनस्

दुरंते विरहिणोजना गोपीजना यस्य श्रीकृष्णस्य दुःसहेत्वां विनेत्यर्थः अथवा विरहि जनस्य वियोगिनोजनस्य दुरंतेदुःखेनांतः समाप्तिर्यस्य तादृशे वियोगिनां दारुणो ननु विरहता युवतिभिः सहयदिश्रीकृष्णं नानुव्रजिष्यसि तदायंवसंतस्तवापि दारुणोभवि ष्यतीतिभावः ध्रुवपदंवसंत सरसतामाह ललितेति ललिताकमनीया लवंगानां लता तस्याः परिशीलनेनालिंगनेन कोमलोमृदुलोमलयस्य पर्वतस्य वासमीरोवायुर्यत्र अनेन वायुस्त्रिविधोवर्णितः कोमलेति मंदत्वंलवंगेति सुगंधित्वं ललितेति शीतलत्वं पुनःकी दृशेमधुकरा मधुकर्तारो येनतुतत्पानकर्तारस्तेषां निकरेण समूहेन करंबिताः संयुक्ताये कोकिलास्तैः कूजितं शब्दितं कुञ्जकुटीरमल्पकुञ्जमंदिरं यत्रत्वांविना बृहत्कुञ्जमन्दिर मपि कुटीवतरुच्छमितिभावः मधुरयुक्ताः कोकिलास्त्वद्विरहखेदे नैवकूजन्तीति ध्व निःअल्पाकुटीरः स्यात्यमरः मधुकरो मधुव्रतोमधुलिहो मधुपालिन इतिच स्तोमञ्जनि कराव्रातवार संघातसंचया इत्यपि स्वभावोक्तिरलङ्कारः ॥ १ ॥

**उन्मदमदनमनोरथपथिकवधूजनजनितविलापे ।**
**अलिकुलसंकुलकुसुमसमूहनिराकुलवकुलकलापे ॥ २ ॥**

वसंतदुःसहतामेव तनोति उन्मदेत्यादिना उन्मद उत्कटः उद्धतो वा उद्भटो वा उ न्मादावस्थां प्राप्तो वा योमदनः कंदर्पस्तादृशो मनोरथो येषां पथिकानां वधूजनास्तैर्ज नित उत्पादितो विलोपो वियोगोयत्र अनेनोद्वेगावस्था तज्जन्यविलापश्चोक्तः कीदृशे अलिकुलैर्भ्रमरसमूहैः संकुलोव्याप्तः कुसुमसमूहः पुष्पवृन्दस्तेन निराकुलः नितरां आ कुलोव्याकुलो वकुलकलापो वकुलपुष्पानां समूहोयत्र अथवा वकुलएव कलापो भूषणं यत्र अनेनत्वद्दर्शनं विनाभानुरागोदयः कस्यापीत्युक्तं कलापो भूषणे बर्हे तूणीरे संहताव पीत्यमरः संकुलं व्यवधानेस्यात्स्पष्टार्थे वचस्यपीति विश्वः केसरवकुल इतिकेसरः कुंकु मंप्रोक्तः केसरोनागकेसरे वाजिमौलिकरे पीहयोक्तः पुष्पादिष्वपीति धरणिः हेतूक्तिरलं कारः ॥ २ ॥

**मृगमदसौरभरभसवशंवदनवदलमालतमाले । यु वजनहृदयविदारणमनसिजनखरुचिकिंशुकजाले ॥३॥**

पुनः कीदृशे मृगमदस्य कस्तूरिकायाः सौरभस्य सुगंधस्य हर्षस्य वा रभसो वेगस्त स्यात्मपरवादिर्नां नवदलमाल नूतनपत्र पंक्तिर्येषां तादृशास्तालास्तमालवृक्षायत्र पुंसे युवजनानां तरुणकामिजनसमूहानां हृदयं विदारयंति ये तादृशाः मनसिजस्य कामस्य ये नखास्तद्वद्रुचिर्दीप्तिर्येषां तादृशा ये किंशुका पलाश कुसुमानि तेषां जालानि यत्र सा धारण तरुण पुरुष हृदय विदारकाः युवति हृदय विदारकाः सुतरामिति तासामष्टगुण कामोदयादित्यर्थः उक्तंच कामस्याष्टगुणः स्त्रीणामिति एतेन वसंतस्य दुःसतोक्ता मृग

नाभिर्मृगमदः कस्तूरी चेत्यमरः रभसोवेगहर्षयोरिति विश्वः रुचिर्मयूखे शोभायामभि ष्वगाभिलाषयोरिति पलाशः किंशुक मत इत्यपि कामः पंचशरः स्मरशंबरादिर्मनसिज इत्यमरः जालं गवाक्षु इत्यपि रूपकालंकारः ॥ ३ ॥

**मदनमहीपतिकनकदण्डरुचि केशरकुसुमविकासे ।**
**मिलितशिलीमुखपाटलपटल कृतस्मरतूणविलासे ॥ ४ ॥**

कीदृशे मदनः काम एव महीपतिः सार्वभौमस्तस्य छत्रार्थे यः कनकदण्डस्तस्ये व रुचिर्दीप्तिर्यस्य तादृशस्य केसरस्य नागकेसरस्य कुसुमानां पुष्पानां विकासः प्रका शो यत्र पुःशेमालिताः शिलीमुखा भ्रमरा एव बाणायत्र तादृशं यत्पाटलपटलं पुष्प समूहस्तेन चतः स्मरतूणस्य कंदर्प तूणीरस्य विलासो लीलासारूप्यं वा यत्र ननुका मः कुसुमं बाण ननुभ्रमरबाणः सत्यं इयंतूत्प्रेक्षा अत्राति व्यथोत्पादकत्वेन भ्रमराणां बाणसाम्यं केसरो नागकेसरः कनकाह्वय इत्यमरः आभिवाणौ शिलीमुखा वितिच समूहे पटलं नाले छिद्रे संरोध केपिचेति त्रिलोचनः कृणोपा संग तूणीरनिषंगा द्रि षुधिरित्यमरः एतेन स्मराभिषेक समर्थो वसंतगुणा उक्तः रूपकालंकारएव ॥ ४ ॥

**विगलितलज्जितजगदवलोकन तरुणकरुणकृतहा**
**से विरहिनिकृन्तनकुन्तमुखाकृति केतकिदंतुरितासे ॥ ५ ॥**

पुनः कीदृशे विगलितं गतं लज्जितं लज्जायस्य तस्य जगतः प्राणिमात्रस्याव लोकनेन विशेष दर्शनेन तरुणकरुणैः नवीन करुणवृक्षैः पुष्पविकाश व्याजेन कृतो हासो यत्र अत्र हासरसस्य शुभ्रत्वात् पुष्पविकाससाम्यं उक्तंच श्वेतोहासः प्रकीर्तित इति अथवा विगलित लज्जितानां वियोगिजनानां जगत्यवलोकनेन तरुणैरभियोगि भिः करुणं यथा स्यात्तथा कृतो हासो यत्र तादृशे वियोगिनो लज्जांत्यक्त्वा पश्यंती तिच हासस्तेषामिति भावः तरुणारसानभिज्ञा वृद्धानां कृतसंनिवारणानां तरुणहासे न दोष इत्युक्तं कीदृशे विरहिणां वियोगिनां कृत मायातिशयेन विदारणाय कुंतस्या युधा विशेषस्य भल्लस्य मुखमग्र भागस्यैवाकृतिर्यस्य तादृशं यत्केतकं तेन दंतुरिता व्याप्ता आसादिशो यस्मिन् केतकिरिति पाठांतरं दंतुरं दन्तमुकुले विषमे मर्मकृन्तने अग्रभागेति तीक्ष्णेच प्रोन्नते चेति हलायुधः करुणः करुणे वृक्षे कृपायां करुणा इति विश्वः दिशस्तु ककुभः काष्ठा आसाश्चेत्यमरः तारकादित्वात्चर्दंतुरित इति कृता च्छेदने युष्मत्यय ॥ ५ ॥

**माधविकापरिमलललिते नवमालतिजातिसुगंधौ ।**
**मुनिमनसामपिमोहनकारिणितरुणाकारणबंधौ ॥ ६ ।**

कीदृशे मधौ वसन्तस्येयं माधविका वसन्तोनायकः माधविका वासन्ती नायिक च तस्याः परिमलेन सौरभेन ललिते मनोहरे यद्वा मधुवसंतः श्रीराधावरासूतं वात त्प्रियत्वान्माधवः श्रीकृष्णोमधुप्रिया माधविका श्रीराधा तस्या अंगपरिमलेन सौरभे न सुखपरिमलेन वा ललिते सुंदर इति ध्वनिः नान्यथे दृशी सौरभ संपत्तिर्वसन्त इति भावः पुनः कीदृशे नवमालिकया नूतन मालिका पुष्पेणातिसुगन्धौ अतिशयेन सौर भयुक्ते अथवा मालति जातीति पाठः नवमालतिर्नूतन मालती जातश्च ताभ्यां सुगन्धौ सौरभयुक्ते गन्धस्ये उत्पूति सुरभि इतीति मालतिजातिरित्येकं पदं वा कीदृशे मुनि मनसामखण्ड ब्रह्मानन्द जुषां सेवमानानां किं पुनरन्येषां मोहनकारिणि मोहजनके एतेन ब्रह्मानन्दश्रीराधाकृष्ण भजनानंदोधिक इति ध्वनितं नचेदं वसन्त सौंदर्य सौ भाग्यं किन्तु विहारणोः श्रीराधाकृष्णयोरेव तरुणानां विलासि युवजनानां स्वाभावि क मित्र यद्वा कारणेन बलात्कारेण बध्नातीति बन्धुरासक्तिकारके पुरुषविहारः स्त्रीणां रति जनको भवत्येवात्र पुरुषाणां मनोहरत्वमुक्तमिति अथवा जीवानामभिमतं तनो तीति तनुकल्पतरुः श्रीकृष्णस्तेन तरुण श्रीकृष्णेनाकारणबंधौ सहजमित्रे विमर्दोत्थे परिमलो गन्धेजनमनोहर इत्यमरः ॥ ६ ॥

**स्फुरदतिमुक्तलतापरिरंभणमुकुलितपुलकितचूते ॥**
**वृन्दावनविपिनेपरिसर परिगतयमुनाजलपूते ॥ ७ ॥**

कीदृशेस्फुरंती सात्विकोदयेन कंपमानानतु वायुना कांत्याद्योतमाना वा अतिमुक्त लतावासंती माधवीवाखतातस्याः परिरंभेनालिंगनेन मुकुलितो जातकामांकुरः पुलकि तः रोमांचितश्चूत वद साधारणगुणः श्रीकृष्णो यत्रचूत एवेति तादृशे अनेनश्रीकृष्ण चन्द्रस्पर्शेनैव चूतस्य पुलकादयोनवासंती लतालिङ्गनेन एवंप्रसिद्धिः महात्मना महाना यिकांगस्पर्शमात्रेणैव नवीनपल्लव पुष्पफलप्रदो भवंतीति दोहदशालेपि दोहदं विनानत रवः पल्लवपुष्प विशेषमाह वृन्दावनाख्य विपिनेवने परिसरे समीपदेशेपरितः सर्वत- गमनशीलेन श्रीकृष्णाजलने पूतेपवित्रिते पूतं यमुनाजलं यस्मिन्निति वातेनपूते श्रीकृष्णा या परितः प्रसरणं वसंतेतच्चरण स्पर्शोपचित पूतत्वादेववासन्ती माधवीलतेत्यमरः प र्यंतभूः परिसरइत्यपि आम्रश्चूतइत्यमरः मुकुलित इतितारकत्वादितिच ७ ॥

**श्रीजयदेवभणितमिदमुदयतुहरिचरणस्मृतिसारम् ॥**
**सरसवसन्तसमयवनवर्णनमनुगतमदनविकारम् ॥ ८ ॥**

एवंगीतार्थवसन्त वर्णनमुपसंहरन्निव विद्वज्जनमदृस्त्यर्थं स्वगीते उत्कर्षमाह जयदेवे त्यादिना श्रीजयदेव कवेरिदं भणितंगीतमुदयति विराजते तत्रहेतुः हरिचरणयोः स्मृति-स्मरणंतेनसारं श्रेष्ठम् अथवा हरिचरणस्मृतिः एवसरोयत्र तादृशंनावहरिपद चैलाहर णपरंमनोहरपरंवा बोद्धव्यम् नहिब्रजवासिनांमाहात्म्य ज्ञानाधानोनन्दकिशोरे प्रणय-कीदृशं सरसश्रृंगारेण सहप्रणयेनत्रासह श्रीराधयावासह इतियावत् पुनःकीदृशं ततस मयोचितं यद्वत्वर्णन यत्रभणिते वनशब्देनवृन्दावनमेवनहि सर्ववनेषु तादृशंसौभाग्यं कीदृशंतंअनुगतमदन विकारं अनुगतः प्राप्तःसंलग्नोवा मदनस्यकामस्यउदयो यत्रविश्व क्षोभकोपियेनवसन्ता अयभणितेन कन्दर्पोपिमोहं प्राप्तइतिभावः नहिमदनो वसन्तेन मोहमुपयाति किंतुश्रीवृन्दावनचन्द्रिका विहारेणेति रसज्ञाएवजानंतीति स्वभावोक्तिर लङ्कारः ८ ॥

**दरविगलितमल्लीवल्लिचंचत्परागप्रकटितपटवासैर्वा सयन्काननानि ॥ इहहिदहतिचेतःकेतकीगंधबंधुःप्रसर दसमबाणप्राणवद्गंधवाहः ॥ १ ॥**

पूर्ववसन्तसमयस्य दुःसहतोक्तासंप्रतितद्वयोरपि वियोगिजनम् संतापकत्वमाह वि गलितेत्यादिना इहास्मिन्वसंते वनेवास्वतोडः सहेतकंधवाहो वायुरपिप्रसरबाधाभवति शचेतोदहतीत्यन्वयः अर्थाद्विरहिणामितिशेषः कीदृशः केतकीगन्धबन्धुः केतकीगन्ध बन्धुयत्रतद्बंधुर्वा अनेनपरमाधिक्यं सूचितं पुनःकीदृशःअसमबाणस्यकामस्य प्राणवत् कामप्राणसदृशः उक्तंचअपूर्वैव धनुर्विद्यामन्मथस्य महात्मानः शरीरञ्चतंयाति भिनस्यत गैतं मनइति किंकुर्वन् काननानिवनानि वासयन् सुरभीकुर्वन्कैः दरयद्विगलिता मलय वायुस्पर्शेणयामल्लीमल्लिकालतातस्याः चंचतःप्रसरंतो येपरागाः पुष्परेणवस्त एवप्रक टिताः पटवासाः पिष्टावकास्तैः अतिसुकुमारत्वादीषद्विगुतायास्तस्याः पुष्परेणु समूह-संभवतीतिविश्वः भावकामस्यानंगत्वेन तद्रूपेण प्रसरत्सएवचेतो दहतीतिध्वनितं ईषद र्थेदराव्ययमिति विश्वप्रकाशः परागः पुष्परजसीतिच पिष्टाच पटवासक इत्यमरः पट वासः परागेपिपटस्वाथधूपन इतिमेदिनीकारः श्लेषोपमालङ्कारः ॥ १ ॥

**अद्योत्संगवसद्भुजंगकवलक्लेशादिवेशाचलं प्रालेयप्लवने च्छयानुसरतिश्रीखण्डशैलानिलः ॥ किंचस्निग्धरसाल मौलिमुकुलान्यालोक्यहर्षोदयादुन्मीलंतिकुहुः कुहूरिति कलोत्तालाःपिकानांगिरः ॥ २ ॥**

पूर्वमेतावद्वायुवर्णनेन वसन्तस्यदुरन्तत्वमुक्तं संप्रतिकोकिला काकलीनामपितथा त्वमाह्वाद्रत्युत्संगेत्यादिना श्रीखण्डशैलानिलो मलयाचलपर्वतवायुः इसोरुद्रस्तस्याचलो हिमाचलस्तमनुसरति किमर्थं प्रलयेप्रलय कालेयत्मवनंजीवनं तदिच्छयावत्स्यादिव अद्रेर्मलयस्योत्संगेयेये वसन्तोभुजंगाः सर्पास्तेषां कवलनेन पायेनयः क्लेशस्तस्मादिव अनेनास्योद्वेगावस्था कथिता किंच पिकानां दुष्कोकिलानांगिरः कुहुःकुहुरित्येवंरूपा पंचमस्वरानुवादिन्योद्दर्षोदयाउन्मीलयंति उद्भवंति किंकृत्वास्निग्धानिरसालानाम्राणां मौलौशिखरेयानि मुकुलानितानि विलोक्यदृष्ट्वा कीदृशाः कलोत्ताला: कलामधुरास्चोत्ता लाश्च पुरुषकूजित्वादुताला: राजसभावोदयत्कला: अनेन तेषामपिस्मरत्वो भवएव म विरहिणां वामत्वादेवेतिभावः एतत्सर्वं दुःसहमिति ध्वनितं मौलिः पुंसिशिखायांस्या न्मुकुटे मस्तकेचेतिहलायुधः ध्वनौतु मधुनास्फुट इतिकलाः अर्थोत्प्रेक्षोपमालंकारः२॥

## उन्मीलन्मधुगंधलुब्धमधुपव्याधूतचूतांकुर क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः। नीयंतेपथिकैः कथंकथमपिध्यानावधानक्षण प्राप्तप्राणसमासमागमरसोल्लासैरमीवासराः ॥ ३ ॥

पूर्वं वसंतस्य तद्वायोश्च कोकिलकाकलीनामपि बहुः सहत्वमुक्तं संप्रति तद्दिवस नामपि च विशेष उदंतत्व माहोन्मीलादित्यापि पथिकैरमीवसंत संबंधिनो वासरादिवसाः कथंकथयमपि महताकष्टेन नीयंते समाप्यंते अतिवाह्यंत इत्यर्थः कीदृशाः उद्गीर्णः प्रकटीकृतः कर्णज्वरः श्रोत्र संतापो येषुकैः उन्मीलंति प्रकटीभवंति ये मधौवसंते गंधा स्तल्लंपटा ये मधुपा भ्रमरास्तैर्व्याधूताः कंपिताः ये चूतांकुरा आम्रमुकुलानि तेषु क्रीडा तां कोकिलानां पाकाकलोऽव्यक्त मधुरा गिरस्तासां ये कलकलाः कोलाहलास्तैकर्ण स्याकाशगुणत्वात्कर्णज्वरस्याधि दीर्घत्वं कर्ण इत्युपलक्षणं सर्वेन्द्रिय ज्वरा इति तर्हि कथंनयिंते इत्यतआह ध्यानेत्यादि ध्यानेस्वप्रिया चिंतने केनापि भाग्योदयेन दवधानं मनसस्तल्लीनत्वं तेन क्षणः प्राप्तोयः प्राणसमाया प्राणवत् प्रियायाः कांतायाः समागम रूपो रसस्तस्मादुत्पन्ना ये रसोल्लासाः रसोत्कर्षास्तैः कोलाहलः कलकलंस्तिरश्चां वासितंक्रतसि इत्यमरः काकलीनु कलेसूक्ष्मे इत्यपि आम्रश्चूतो रसालो सावित्यपि मधु माधे पुष्परस इत्यपि मधुपभ्रमरालय इत्यपि स्वभावोक्ति विरोधीरेवालंकृती ॥ ३ ॥

## अनेकनारीपरिरम्भसंभ्रमस्फुरन्मनोहारिविलासला

लसम् । मुरारिमारादुपदर्शयन्त्यसौ सखीसमक्षंपुनराह राधिकाम् ॥ ४ ॥

एवं रसार्थ मुद्दीपनेन वसन्तभावा वर्णिता इदानीं रागान्तरेण विभावानाह अने केत्यादि या पूर्वं वासन्ती परोक्षतयो वा चसासौसखी समक्षराधिकां पुनराहेत्यन्वयः किंकुर्वती आरात्समीपे मुरारिर्मुरस्य मधुरसमूहस्यारिस्तद्विस्मारकः श्रीकृष्णस्तं द र्शयन्ति मधुर मुनरकामिति मुरारिशब्दार्थो दर्शितः कीदृशं अनेकः नारीणां परिरम्भ संभ्रमेणालिङ्गनादरेणा स्फुरच्चोमनोहारी विलासस्तस्य लीलासा औत्सुक्य यस्यतं अथवा अनेकनारी विलास भ्रमेण वैदग्ध्यं विद्यते यस्यां श्रीराधायां समं अन्यत्पदं पूर्ववत् संभ्रमः स्नेहहर्षयोरितिविश्वः आराद्दूरसमीपयोरित्यमरः स्वद्विरहे प्रत्य चता सम्भवति सा पुनर्नायिका नायकयोर्नसखीनामिति अर्थान्तरन्यासोलंकारः ॥ ४॥

## रामकरीरागे यतिताले ॥

चन्दनचर्चितनीलकलेवरपीतवसनवनमाली । केलिचलन्मणिकुण्डलमण्डित गण्डयुगस्मितशाली । हरिरिहमुग्धवधूनिकरेविलासिनिविलसतिकेलिपरे ॥ १॥ ध्रुवपदम् ॥

एवं राधामाधवयोः रहःकेलि निरूप्येदानीं समुदायकेलिंगीते नैव दर्शयति चन्द नेत्यादिना गीतस्य रामकरीरागः रूपकतालश्च तालरूपं पूर्वमेवोक्तं रागलक्षणं स्वर्ण प्रभात्युरभूषणाच नीलं निचोलं सुतनौ वहन्ती कांतिपदोपात माधिश्रितोपि मानोन्नता रामकरी प्रतिष्ठा इति गीतार्थमाह हे विलासिनि हे कृष्णविहारसीले पश्यैतदिति शेषः इह वृन्दावने वसन्ते वा मुग्धवधूनिकरे सुन्दरवधू समूहे हरिर्मनोहरो विलसति क्रीडांकरोति त्वां विना क्रीडन्नपिन क्रीडतीत्यर्थः कीदृशे केलिपरे क्रीडापरायणे अत्र मुग्धवधूशब्देन केलिपर शब्देनच हावभावाद्यनभिज्ञता सामान्य क्रीडा परतावर्व्यंजि विलासनीति संबुध्वात्वय्येव सर्वकलासंपद्दर्शिता विलसतीति सामान्य क्रीडेति ध्व निः कीदृशो चन्दनेन चर्चितत्निप्तेपि नीलकले केलिकलाकौशले नीलामनी भूता कला यस्मिन् किं भूतोहरिः वरेपीतवसन वनमाले यस्य अथवा त्वद्वियोगमसह माना एव चन्दनेनचर्चिता अनुलिप्ता नीलकलेवरः पीतवसनं वनमालाच यस्यसः एतेन त्वय्येवा नुराग उक्तः उक्तंच अन्तर्गता मदन वह्निशिखावलीयासा बाधते किं मिह चन्दनचर्चि ताभिः यत्कुम्भकारह दहनोपरि पंकलेपस्तापाय तत्पुनरसौ ननुतापशांत्यै इत्यादि

तस्मात्त्वमेव विलोकये निदर्शनीयतां कीदृशो हरिः केलिषु क्रीडासु चलन्ती कम्पमाने ये मणिकुण्डले ताभ्यां मण्डितमलंकृतं गण्डयुगं यस्य स्मितेनेषद्धसितेन वा शोभमा नः स्मितलक्षणंच भरते ईषद्विकासितैर्गण्डैः कटाक्षैः सोष्ठवान्वितैः अलक्षितद्विजं धीर मुत्तमानं स्मितं भवेदिति केलिचलन्मणिकुण्डलेत्यादिना कुण्डलचलनं साकांक्षं नखे तासु काचिद्वृषभानुनन्दिनी तुल्याधिकाच इति यत्स्मितं तेन शाली शोभमानो ननु तासां विलासेनेतिभावः मुग्धवधूभिरित्यत्र कर्मधारयः एतेन मौग्ध्यमेव ननु कौशिकुश लता दर्शिता किं क्रीडास्यपि तद् चेष्टांकरोतीति अतएव त्वया समक्षेण भवितव्यमि ति ममप्रार्थना मुग्धः सुन्दरमूढयोरिति विश्वः विलासो हावविशेषः तात्कालिको विशेषस्तु विलासोंगक्रियादिष्वित्यमरः अथकलेवरं गात्रं वपुः संहननमिरः गण्डौ कपोलावित्यमरः स्वरूपोक्तिरलंकारः विलासलक्षणं वा तस्या गासनादीनां नेत्रवक्त्रादि कर्मणां उत्पद्यते विशेषः यः सविलासः प्रकीर्तित इति ॥ १ ॥

**पीनपयोधरभारभरेणहरिंपरिरभ्यसरागम् ॥ गोपव धूरनुगायतिकाचिदुदंचितपञ्चमरागम् ॥ २ ॥**

व्रजवधूनां हावभावाद्यनभिज्ञस्त्वंकथयन् पुनस्तामेव युवतियूथलीलामाह पीनेत्यादि काचिद्गोपवधूःपीनपयोधरभारभरेणातिस्थूलस्तनगौरवाधिक्येनसरागंसस्नेहं यथास्या त्तथा अथवा पीनोऽतितीक्ष्णः पयोधरयोर्भारस्तस्य भरेण भारेण स्वस्यापि भारभूतेन हरिं मनोहरं परिरभ्यालिंग्यहरेर्गानानन्तरं गायतिनतुस्वयं गायतीत्यवैदग्ध्यं स्फुटमेव श्रीकृष्णालिङ्गेच्छांविनापि प्रथमालिंग्य शृङ्गाररसशोभामावहति उक्तंच वेषहेशक्रियाला पपरिरम्भादिसेवनैः ॥ स्यादानन्दप्रदायूनोरुभयोरनुरक्तयोरिति कीदृशंहरिं सरागं त्व य्येवसरागेन स कामभावेन सस्नेहेन भवा सानुरागं ननु सिन्दूरादिरागसंयुक्तं एतेन तासामवैदग्ध्यमेवध्वनितं पुनः कीदृशं उदंचितस्तालालापनेनात्यूर्ध्वंनीतः पञ्चमस्वरो येन तं शृङ्गारे पञ्चमरागाख्यस्वरोबाहुल्येन क्रियते अथवा पञ्चमरागगानन्तासांपरी क्षार्थाय तवाह्लादजननाय चेति ध्वनिउक्तंच निषादंष्पतेवाजीगावस्तृषभभाषिणः अजा विरुतुगंधारं धैवतंबृंहतेगजः । खड्गंमयूरोवैब्रूतेमृगामध्यमभाषिणः ॥ पुष्पसाधारणे काले कोकिलोरौति पञ्चममिति हास्यशृङ्गारयोर्गेयौस्वरौ पञ्चममध्यमौ षड्जर्षभौ त- थाज्ञेयौ वीररौद्राद्भुतेरसे गन्धारश्च निषादश्च कर्तव्यौकरुणाश्रयौ इति ॥ २ ॥

**कापि विलासविलोलविलो**

कस्याश्चिदवैदग्ध्यमाह कापीत्यादि कापि मुग्धवधूः मधुसूदनस्य वदनसरोजं मुख पङ्कजं ध्यायति समक्षस्य श्रीकृष्णस्य ध्यानादवैदग्ध्यमेव विज्ञायतेऽस्याः कीदृशं विलासे न विशेषनर्त्तनेन विलोलयोश्चञ्चलयोर्विलोचनयोर्यत्खेलनं तेनजनितं उत्पादितोमनुजः कामोयेन तं पुनः कीदृशं मुखं अधिकं अनुपममाधुर्यविलाससारसन्दोहमित्यर्थः क्रियापादविशेषणं वा सौगन्ध्यादिगुणमधुररसेन कामोद्दीपकत्वात्तापहारकत्वाच्चवदनस्य सरोजोपमा मधुसूदनपदं पूर्ववत् कापीति सामान्यकथनाय ध्यायतीत्यङ्गसङ्गाभावो दर्शितः प्रातश्चास्मिन्नवसरे त्वयागतव्यमिति कलाकौशलेनायंवंचनयिदइतिभावः ॥ ३ ॥

**कापिकपोलतले मिलितालपितुं किमपिश्रुतिमूले॥**
**चारुचुचुम्बनितम्बवतीदयितंपुलकैरनुकूले ॥ ४ ॥**

कापि नितम्बवती गोपवधूः दयितं कृष्णं चारुमनोहरं यथास्यात्तथा कपोलतले चुम्बनं कृतवती कीदृशी किमपि लपितुं मंत्रयितुं प्रलपितुं वा कन्दर्पवशाद्धैर्यैणस्वचातुर्यं रक्षणाय श्रुतिमूले कर्णमूले मिलिता संलग्ना व्याजेनालिंगनाय वा नामामृतं तत्कर्णमूले प्रक्षेप्तुं वा अतएवोक्तं किमप्यनिर्वचनीयमिति नितम्बवत्यनेनालिंगनाचतुरत्वोक्ता कीदृशेपुलकै रोमाञ्चैरनुकूले नायिकाभिलापसूचके पुलकोद्गमस्तुत्वन्नामश्रवणसात्विकोदयात् चुम्बनेनेत्यस्या अधीरत्वं सम्पादितं औत्कण्ठोनसहसाकान्तमुखचुंबनं सखीजनहास्यकरं भवतीतिभावः यदात्वत्कथाश्रवणेन जातपुलकोभवति तदा त्वय्येवस्नेह प्राचुर्यं तस्मात्त्वया शीघ्रं तत्र गंतव्यमिति ॥ ४ ॥

**करतलतालतरलवलयावलिकलितकलस्वनवंशे॥**
**रासरसेसहनृत्यपराहरिणायुवतिःप्रशशंसे ॥ ५ ॥**

एवं स्नेहप्राचुर्यरीत्या सन्तुष्टां श्रीराधां सखी पुनराह हे रासरसे आश्चर्ये सखि कलय रासरसे गोपवधू निकररचितेपि युवतिः श्रीराधैव प्रशशंसेस्तुताश्लाघितेत्यर्थः नत्वयासह नृत्यपरा रासरसस्तु वरश्रीकदम्बांविना न भवतीत्यमनोहरत्वं तन्निकरस्योक्तं अथवा हरिणासह नृत्यपराकाचिद्युवतिस्त्वां प्रशशंसे ननु साकथं तथा चक्रे उच्यते रमणीयवस्तुनिनकस्य बहुमान इति अथवा रासे रासक्रीड़ायांरसः बहुनर्त्तकीनृत्यविशेषो गोधुक्रीड़ायां तस्मिन्हरिणासह नृत्यपरा नृत्यमात्रकुशला ननु सर्वकर्मसु एवमपि तस्याउपहासः तत्रैवप्रशशंसे इतिध्वनिः कीदृशे करतलयोस्तालेन परस्परवादनेन तरलाचञ्चलायावलिः कङ्कणपंक्तिस्तया कलितोमिश्रितः कलस्वनश्चाव्यक्तमधुरशब्दसहितो वंशोवेणुर्यत्र तादृशे रासरसइत्यनेन गोदुहक्रीडास्त्वेवसास्तुत्या नतुसकलसंगीतकलास्वितिध्वनितं दुमभेदे करीस्कालेतालं तु हरितालक इतिविश्वः तरलश्च

कोवङ्गेहारमध्यमणावपीतिहारावली रासस्तुगोदुहां क्रीड़इत्यपिवेति विश्वप्रकाशः स्वभावोक्तिरलङ्कारः ॥ ५ ॥

**श्लिष्यतिकामपिचुंबतिकामपिरमयतिकामपिरामाम्॥ पश्यतिसस्मितचारुपरामपरामनुगच्छतिवामाम्६॥**

सखिरासविहारेतासांत्वद्गुरुरीत्या प्राधान्यं ताभिः केलियांसांत्वद्गौरवान्वेपणा यास्ति ननुतासां गौरवं उक्तंचात्र राधामाधाय हृदये तत्याज व्रजसुंदरीरितिस्वद्गौरवमेवाह श्लिष्यतीत्यादिना सः कृष्णचंद्रः कामपि रामां क्रीड़ास्वभावां श्लिष्यति श्राश्लिष्यालिंगनं करोति कामपिरामां चुंबति चिबुकोद्धृत्य चुंबनंकरोति कामपिरामां कुचस्पर्शाधरपानमधुरवचनादिना रमयति भावगर्भितस्मितेन चारुतरामतिशयेन मनोहरां पश्यत्यवलोकनं करोति एवं तास्वभिमुखं कृयमाना सुप्रीत्या श्रीकृष्णालिंगनादिकं दृष्ट्वा क्रियमाणं अपरां वामां मात्सर्यस्वभावां मनोहरस्वभावां वा तामनुगच्छति तत्सखीमनुनयार्थमनुगतिंकरोति अथवा तद्वंचनमेवं प्रकारेण विधाथापरां न विद्यतेऽपराऽन्यास्वत्सदृशी श्रेष्ठा तां स्वां वामां कोपवतीं स्वापराधशमनायानुगच्छति नहि बलात्कारेणालिंगनादिके कृतेपि ताभिर्नकृतमित्यवैदग्ध्यंसूचितं तासां परस्य कृतालिंगनादौ शृंगाररसपुष्टो भवतीति ग्राम्यसुखे प्रतिसिद्धिः अतएतासामपकर्षार्थं स्वोत्कर्षार्थंशृंगाररसपुष्ट्यर्थंच नायकवरांतिके त्वयागंतव्यमिति सूचितं सुंदरी रमणी रामेतिविश्वः मुदासंक्रीड़द्भिर्व्रजयुवतियूथैः परिवृतो नलोपं प्राप्नोति कश्चिदपिमनाग्नंदतनय. सदुक्तं तस्मिन्नेव सहचरिमनागनन्यविषयंमनः कर्तुंका।तेतच्चरणपातैकसरणे ॥ ६ ॥

**केलिकलाकुतुकेनच काचिदमुंयमुनाजलकूले ॥ मञ्जुलवञ्जुलकुञ्जगतंविचकर्षकरेणदुकूले ॥ ७ ॥**

लीलांतरमाह केलिकलेत्यादि काचिद्व्रजांगणा अमुंश्रीकृष्णचन्द्रम् केलिकलाकुतुकेन क्रीड़विलासोत्पादकव्याजेन दुकूले पट्टवस्त्रेविषये करेणहस्तेन विचकर्ष आकृष्टवतीदुकूले गृहीत्वाऽमुंविचकर्षेति केचित् ब्रुवंति कीदृशंमनोज्ञवेतसमन्दिरगतं तवध्यानायतद्वंचनाय वा रहःस्थितमितिसूचितं कुत्राकृष्टवती यमुनाजलकूले यमुनाजलेकेलिविधानायाकृष्टवतीतिध्वनितं अत्रान्यासक्तस्य श्रीकृष्णचन्द्रस्य स्वप्रियाध्यानारक्तस्यवा बलाकर्षणादस्य अधीरत्वं मुग्धत्वंच स्फुटमेव अतस्तवाधरामृतपानेन त्वयासंजीवनीय इतिममप्रार्थना वञ्जुलोवेतसे मतइतिविश्वः मनोज्ञं मञ्जुमञ्जुलमित्यमरः कुतुकञ्चकुतूहलमपिच दुकूलं पट्टवस्त्रेस्यादतिसूक्ष्मांशुकेपि चेतिविश्वः पर्यायोक्तिरलङ्कारः रसवदलङ्कारश्च ॥ ७ ॥

**श्रीजयदेवकवेरिदमद्भुतकेशवकेलिरहस्यम् ॥ वृन्दावनविपिनेललितंवितनोतुशुभानियशस्यम् ॥ ८ ॥**

उक्तलीलावैभवश्रवणफलमाह श्रीजयदेवेति श्रीजयदेवकवेः इदंगीतंशृण्वतां पठतां शुभानि श्रीकृष्णस्मरणात्मकानिकल्याणानि वितनोतु विस्तारयतु कीदृशंअद्भुतं अद्भुतार्थं अद्भुतं स्वरूपं वा आश्चर्यकरञ्च केशवस्य श्रीकृष्णचन्द्रस्य केलिरहस्यं क्रीडाहर्षः क्रीडागोप्यंवा यत्र अद्भुतत्वमेव तदेवगोपवधू दाक्षिण्यानुरोधेन क्रीडितं श्रीराधोत्कर्षख्यापनायान्यमुग्धत्वानिरूपणायेति अथवा अद्भुतं युगपत् व्रजनारीणांरत्युत्पादनात् कश्चेशश्चैसोयस्येति कियदेतद्व्रजांगणावशीकरणं पुनः कीदृशं वृंदावननाम्निवने चलितं नानारसान्वितं वनविहारक्रीड़ायुक्तं वा बलेः कामधेनुस्मरणात् वनविहारे व्याजेन श्रीराधान्वेषणचातुर्यमुक्तमितिभावः यशस्यं यशसेहितं यशस्करंवा यशः सहितं वा ॥ ८ ॥

**विश्वेषामनुरञ्जनेन जनयन्नानन्दमिंदीवर श्रेणिश्यामलकोमलैरुपनयन्नंगैरनंगोत्सवम् ॥ स्वच्छंदंव्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः शृंगारः सखिमूर्तिमानिवमधौमुग्धोहरिःक्रीडति ॥ १ ॥**

सकलशृङ्गाररससकलाभिज्ञस्य श्रीकृष्णस्य श्रीराधोत्कर्षप्रतिपादनाय पूर्वगीतेहावभावाद्यनभिज्ञाभिर्गोपीभिर्यूथलीलैवोक्ता इदानीं श्रीकृष्णक्रीड़ोत्कर्षं तदर्थमाह त्रि-श्वेषामिति हेसखि राधे मधौ वसन्ते हरिर्मनोहरणशीलःक्रीड़तीत्यन्वयः कीदृशः मुग्धः त्वद्विरहेणमूढः यद्वामनोहरः त्वदागमनकांक्षया सुन्दरः किं कुर्वन् विश्वेषांव्रजवधूनां वानुरञ्जनेनानुरागेनानन्दं सन्तोषं जनयन्नुत्पादयन् पुनः किं कुर्वन् इन्दीवराणां नीलकमलानां श्रेणयः पंक्तयः तद्वन्नीलैः कोमलैश्च सुकुमारैः शृङ्गारैर्वानंगस्य कामस्योत्सवं हर्षं उपनयन्नुत्थापयन् कीदृशोहरिः स्वच्छन्दं स्वेच्छया व्रजसुन्दरीभिरभितः सर्वतो भावेन प्रत्यङ्गं अङ्गं अङ्गं प्रति इति प्रत्यङ्गं आलिंगितः आश्रितः कयाचित्तांबूलस्रक् चन्दनाद्युद्दीपनरूपं कयाचित्सस्मितकटाक्षानुरूपं कयाञ्चित् रोमाञ्चस्वेदादिरूपं शृङ्गारस्याङ्गमाश्रित इति भावः क इव मूर्तिमान् साङ्गः शृङ्गः शृङ्गाररसइव श्रीकृष्णस्य श्यामाङ्गत्वेन शृङ्गारसाम्यं श्यामोभवति शृङ्गारः शृङ्गारविशेषणान्यप्येतानिपदानि १॥

**रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा मभ्य**

णींपरिरभ्यनिर्भरमुरः प्रेमांधयाराधया । साधुत्वद्वदनंसुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भटचुंबितः स्मितमनोहारीहरिःपातुवः ॥ १ ॥

## इतिश्रीगीतसामोददामोदरोनाम प्रथमस्सर्गः ॥ १ ॥

सङ्गीते श्रोतृन् कविराशिषं ददाति सोल्लासेति हरिः श्रीकृष्णोवोयुष्मान् पातुरक्षतु कीदृशः स्मितेन मनोहारी स्मितहरो वा पाठः स्मितेनेषद्धास्येन शोकहरः हारी हारवान् पुनः कीदृशः प्रेमान्धया सहचरीवनप्रेमपूरया राधयागाढं यथास्यात्तथा उरो वक्षःस्थलम् आभीरवामभ्रुवाङ्गोपवधूनां अभ्यर्णे समीपं परिरभ्याश्लिष्यरासक्रीडायां उल्लासभरेण हर्षातिशयेन गीतस्तुतिव्याजात् गानप्रशंसाछलेन इति व्याहृत्योक्त्वा उद्भटं यथास्यात्तथा चुम्बितः इतीति किं साधुत्वद्वदनं सुधामयं किं भूतानां शृङ्गारविलासवतीनां अत्रानादरेषष्ठी ननुसाकथं तत्रके तथोक्तं प्रेमान्धयेति उद्भटचुम्बनं कामसर्वस्योक्तं तल्लक्षणं कान्तभुजाभ्यामालिंग्य प्रेयसी प्रणयान्विता सशब्दं चुम्बति मुखं यत्तदुद्भटमुच्यत इतिसर्गान्ते टीकाकारोक्तिः ॥ वन्देयुवालयूथस्थं कृष्णंकेलिकलानिधिम् कालिन्दीजलसंसिक्तं सर्वाभरणभूषितम् ॥ १ ॥

इति श्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंसशिवदासात्मजश्रीवनमालिभट्ट
विरचितायां वनमालिसञ्जीविन्यांश्रीगीतगोविन्दटीकायांव्रजयुवति
यूथकेलिवर्णनेसामोददामोदरोनामप्रथमस्सर्गःचतुर्थःप्रबन्धः॥१॥

विहरतिवनेराधासाधारणप्रणयेहरौ विगलितनिजोत्कर्षादीर्ष्यावशेनगतान्यतः ॥ क्वचिदपिलताकुञ्जे गुञ्जन्मधुव्रतमण्डलीमुखरशिखरेलीना दीनाप्युवाचरहःसखीम् ॥ १ ॥

द्वितीयेकथ्यतेसर्गे श्रीराधाप्रणयोदयाः । सेर्ष्या कुञ्जान्तरगता सखींराधासमब्रवीत् ॥ एवं पूर्वं गोपसीमन्तिनी यूथकेल्युत्कर्षमालोक्य विगलितनिजोत्कर्षैव श्रीराधा सखीमाहविहरतीति श्रीराधारहएकान्ते गोप्यमपि वक्ष्यमाणमुवाचोक्तवतीत्यन्वयः कीदृशी हरौ श्रीकृष्णेवने विहरति क्रीडति सति ईर्ष्यावशेनासहिष्णुतया अन्यत् अन्यस्मिन् कुञ्जेगता पुनः कीदृशी क्वचित्कदाचिदपि लताच्छादितेकुञ्जे लीना तद्वचनानि श्रातुं [illegible] कुञ्जमन्दिरे [illegible] विगलितनिजोत्कर्षात्विशेषेणगतो

निजः स्वीयउत्कर्षो हरेरहमेव वल्लभाइत्येवंरूपस्तस्मात् किम्भूते हरौ साधारणप्रणये श्रीराधायामन्यगोपीतुल्यस्नेहे असाधारणप्रणयेवेति छेदः श्रीराधामन्तरानान्यासुगोपीसुप्रीतिस्तस्मिन् कीदृशे कुञ्जे शब्दायमानभ्रमरसमूहे शब्दयुक्ताग्रभागेवा अतएवदीनादुःखिताविलप्रभोयं विभावनालङ्कारः शिखरंत्वग्रभागेस्यान्माणिक्ये शेखरेपिचेतिधरणिः प्रणयः प्रोन्नविश्रंभइत्यमरः ईर्ष्याप्याहुःसमानेषु मानदानाद्यमर्षणमितिभरतः ॥ १॥

## गुर्जरीरागेप्रतिमण्ठताले ॥

**सञ्चरदधरसुधामधुरध्वनिमुखरितमोहनवंशम् ॥ चलितदृगञ्चलचञ्चलमौलिकपोलविलोलवतंसम् ॥ १ ॥ रासेहरिमिहविहितविलासम् । स्मरतिमनोममकृतपरिहासम् ॥ ध्रुपदम् ॥**

अमर्षेण किमुवाचेत्यतः सञ्चरदित्यादिना श्लोकोक्तमर्थं गीतेनाह गुर्जरीरागेप्रतिमण्ठताले रागलक्षणं पूर्वोक्तमेव द्रुतत्रयेणगातव्यं कुंदश्चप्रतिकण्ठकइति माललक्षणं हेसखिमममनः कृतापराधमपिहरिं इहकुञ्जमन्दिरे स्मरति तद्यथा केतकीकुसुमं भृंगखंड्यमानोपि सेवतेदोषाः किंनामकुर्वन्तिगुणाय हृद्यचेतसइति कीदृशं रासेरासक्रीडायांविहितः कृतःविलासः क्रीडायेनध्रुपदंपुनः किंसंचरतानानाप्रकारेण स्फुरताधरसुधामधुरेण ध्वनिना शब्देनमुखरितः शब्दितः शब्दितोमोहनो विश्वमनोहरो वंशोयेनतं पुनः कीदृशः चलितःकस्याचिन्मूर्च्छाविशेषेणसात्विकरसोदयेनवा दृगञ्चलो कटाक्षोयस्यचञ्चलश्चपलमौलिः शिखण्डाग्रभागोयस्य कपोलयोर्विलोलौ चंचलावतंसौकर्णभूषणे यस्यतं कर्मधारयः पीयूषममृतंसुधेत्यमरः मौलिःकिरीटेकेशाश्च संयतामौलयइति च पुंस्युत्तसावतंसौद्वौ कर्णान्तरेचशेखरइत्यमरः ॥ १ ॥

**चंद्रकचारुमयूरशिखंडकमंडलवलयितकेशम् ॥ प्रचुरपुरंदरधनुरनुरंजितमेदुरमुदिरसुवेशम् ॥ २ ॥**

नन्वेवंभूतः श्रीकृष्णस्तदा व्यासंगादिनानस्मर्तव्यः सत्यं बलाच्चेतस्यायाति किंकर्तव्यं कीदृशं चंद्रकेन विचित्रचिह्नेन चारूणां मनोहराणां मयूरपिच्छानांमंडलेन समूहेन बलयितावशेषितः केशायेन किंच प्रचुरैर्बहुभिः पुरंदरस्य इंद्रस्य धनुभिरनुरंजितश्चित्रितोमेदुरः स्निग्धोमुदिरः सानंदोजलदोमेघस्तद्वत्सुवेशं सुंदरं अत्रनानामणिखचित [illegible] साम्यमिति अभूतोपमेयं श्रीकृष्णस्य मे

शिखंडः पिच्छं बर्हं नपुंसक इत्यमरः वेष्टितं स्याद्वलयितमित्यपि मुदिरः कामुकांबुद इति विश्वः वेश्मवेश्यागृहे प्रोक्तो नेपथ्ये गृहमात्रक इति समौ चंद्रमे चकाविन्यमरः मयूरो बर्हिणोबर्हीत्यपि मंडलं वर्तुले प्रोक्तं समूहे विद्वदेरके आवृतौ देशभागेपि मंडलं युद्धभूमिक इति वैजयंतीभावोत्प्रेक्षारूपकोलंकारः ॥ २ ॥

## गोपकदम्बनितंबवती मुखचुंबनलंभितलोभम् ॥
## बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभम् ॥ ३ ॥

ननु श्रीकृष्णस्त्वय्यनुरागरहितोऽन्ययुवतिभिः सह क्रीडति किमर्थं स्मरसीति सत्यं सगुणवांस्तत्राह गोपेत्यादिना पुनः कीदृशं गोपकंदवस्याभीरसमूहस्य या नितंबवत्यो नार्यस्तासां मुखचुंबनेन लंभितः प्रापितो लोभो यस्य तं अथवा तं नितंबवतीभिः स्वमुखं चुंबने लंभितो लोभो येन तं तस्य तासु स्वभावजः स्नेहो नास्ति परन्तु बलात्कारेण ताभिश्चवने लोभः कारित इति भावः किंच बंधुजीववत् बंधूकपुष्पवत् मनोहरो योधरपल्लवः पल्लवाकृतिरधरश्रेष्ठो यस्य तं यद्वा बध्नाति बंधुः प्रणयजनस्तं जीवयतीति सचासौ मधुराधरपल्लवो यस्य तं पुनः उल्लसितेन दीप्यमानेन स्मितेनेष द्धास्येन शोभा यस्य तं यदि बंधूकपुष्परागेण मधुरपल्लवाधररागरंजितो भवति सच स्मितकुन्दकलिकया युतो भवति तदाधरशोभामनुहरे दित्यद्भुतोपमेयं रक्तस्तु बंधूको बन्धुजीव इत्यमरः सरसोमधुः प्रोक्तो मधुरोथ मनोहर इत्यनेकार्थः पल्लवो स्त्री किशलयमपि उपमारूपकालंकारः ॥ ३ ॥

## विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रम् ॥
## करचरणोरसिमणिगणभूषणकिरणविभिन्नतमिस्रम् ४ ॥

पुनः कीदृशं विपुलो विस्तीर्णः पुलको रोमांचो यत्र ताभ्यां भुजपल्लवाभ्यां पल्लववत् कोमलाभ्यां वलयितं चेष्टितं वल्लवयुवतीनां गोपवधूनां सहस्रं समूहो येन तं अत्र वलयितशब्देनावज्ञया तासां वेष्टनमात्रं नतु गाढालिङ्गनचुम्बनादिकमिति भावः सस्नेहालिंगनादिकं तु तस्य मय्येवेति तात्पर्यमिति किंच करयोश्चरणयोश्चोरसि च मणिगणानां रत्नसमूहानां भूषणानां किरणैररश्मिभिर्भिन्नं विशेषेण नाशितं तमिस्रमन्धकारो येन तं अनेन प्रथमाभिसारसंगमे मदीयागालंकार प्रकाशेन ध्वान्तनाशेनाव कुंठितमुखीं दृष्ट्वा बलादानीतां चेष्टां कृतवान् लक्षणमपि विस्मर्तुमस्मनोनार्हतीति प्रेमपराः काष्ठादर्शिता स्वसौभाग्यातिशयोपि दर्शित इतिभावः करचरणोरसीति प्राण्यंगत्वादेकत्वं बहुत्वेपि वेष्टितं स्याद्वलयितं वलयालिंगनेपि चेति कोशप्रदीपे अन्धकारो स्त्रियांध्वांतमित्यमरः किरणोत्र मयूखांशुरित्यपि ॥ ४ ॥

**जलदपटलचलदिन्दुविनिन्दकचन्दनतिलकलला टम् ॥ पीनपयोधरपरिसरमर्दननिर्दयहृदयकपाटम् ॥५॥**

पुनः कस्योत्कर्षमेव प्रथयन् कथयंत्याह जलदेत्यादिना जलदपटले मेघसमूहे चल तोराजमानस्य चलदिति पाठे चलतः स्फुरत इंद्रोश्चंद्रस्य विनिन्दकस्तवोभाति शायी चंदन तिलकः चंद्राकृतितिलकोललाटे यस्य तं पुनः किं गोपवधूनां पीनौ पीवरौ तौ क्षणौ पयोधरौ तयोः परिसरस्य पर्यंतभागस्य प्रसरणशीलस्य वा मर्दननिर्दयं दया रहितं हृदयमेव कपाटवद्विस्तीर्णंहृदयं यस्य कपाटपदस्यायं भावः कपाटं प्रियधनर क्षार्थमपि निवारणार्थं च दीयते अत्र श्रीकृष्णचंद्रस्य प्रियधनं श्रीराधैवतच्चित्त हृदये तिष्ठतीति तद्रक्षार्थं हृदयं कपाटपदेन गृहीतमिति अर्थान्तरन्यासोपमालंकारः उत्प्रेक्षा रूपक इत्येके कपाटमररंतुल्य इत्यमरः पर्यंतभूः परिसर इत्यपि कपाटं कुचिकाभृते नोद्घारितं यथा तथामांविना तद्धृदयालिंगन रस इति सूचितं मद्व्यतिरिक्तानां के मुखं पाटयतीति वा कपाटशब्दार्थः पुनः स्वोत्कर्षप्राधान्यमेव वर्णयंत्याह ॥ ५ ॥

**मणिमयमकरमनोहरकुंडलमंडितगंडमुदारम् ॥ पीतवसनमनुगतमुनिमनुजसुरासुरवरपरिवारम् ॥ ६ ॥**

मणिमयेत्यादिना पुनः कीदृशं मणिमये मणिखचिते मकरवन्मनोहरे मणिमय मकरेण रत्नमयमत्स्येन वा मनोहराभ्यां कुंडलाभ्यां मंडितौ भूषितौ कपोलौ यस्यतंकी दृशंउदारं स्वलावण्योदारगुणयुक्तं तल्लक्षणंदशरूपके दानमभ्युपपात्तिश्चतथाच प्रियभा षण स्वजनेच परिज्ञापितदौदार्यं मुदाहृतमिति उदारपदेनेति यन्मया चिंतितंतत्सर्वंत त्क्षणमेव पूरितवानिति सकथं विस्मर्तव्यः पुनः पीतेवसनेयस्य पीतवसनं वाअनुगताश्चि तामुनयः शुकादयः मनुजाः परीक्षिदादयः ब्रह्मादयः असुराः प्रह्लादादयस्तएववराः श्रे ष्ठा वराष्टन्दावननिवासिनो वागोपीजनाः परिवाराः सेवकायस्यतं अथवा सर्ववरः श्री गोपीजनलक्षणः श्रीराधारूपोवापरिवार सेवको यस्यतं स्वभावोक्तिरलङ्कारः रसवद लङ्कारः ॥ ६ ॥

**विशदकदंबतलेमिलितंकलिकलुषभयंशमयंतम् । मामपिकिमपितरंगदनङ्गदृशामनसारमयंतम् ॥ ७ ॥**

पुनः श्रीराधास्वातंत्र्यमेवाह विशदेति पुनः कीदृशं विशदस्यस्वच्छस्य कदंबस्यत लेमूलेमिलितंसंलग्नं मदर्थंमदपेक्षयाग्रतएव कदंबस्यतलेमूले गत्वामयासहक्रीडार्थं वा निलयि स्थितमितिभावः पुनःकलेः प्रणयकलहस्य कलियुगस्य कलुषं साधारणत्र ज

बधभजनं तत्कृतमालिन्यं शमयंतं नाशयंतंत्वय्येवममप्रीतिर्नान्यासु इत्यादिप्रेमवाक्यै रित्यर्थःपुनः कीदृशं किमप्यनिर्वचनीयस्तरंगद्वद्दुच्छदनंगः कामोयत्रतयादृशा दृष्ट्या मनसा हृदयेनचमामपि रमयंतं अतएव सकलाभिज्ञं हारिमेमनः स्मरतीतिसूचितं कलिः स्यात्कलहेशूरे कालिरंत्ययुगेप्यपीति विश्वः कलुषंत्वाविलैनसोरितिच विभावना लङ्कारः ॥ ७ ॥

**श्रीजयदेवभणितमतिसुन्दरमोहनमधुरिपुरूपम् ॥ हरिचरणस्मरणंप्रतिसंप्रतिपुण्यवतामनुरूपम् ॥ ८ ॥**

गीतोक्तंसंग्रहेणाह श्रीजयदेवकवेः भणितंगीतं पुण्यवतां श्रीराधाकृष्णस्मरणपुण्य जनानांहरिचरणस्मरणं प्रति अनुरूपंयोग्यं तल्लभ्यामित्यर्थः नचैतदन्यैर्लभ्यमितिभावः अतिसुन्दरं मोहनं व्रजवधूमोहकारि मधुरिपोः दैत्यशत्रोरमृतवसंतशत्रोर्वा श्रीकृष्णस्य रूपंयत्र कलौबहूनां रागिनां शृंगारादिप्रवृत्तानामनायासेनैव श्रीकृष्णस्मरणं जात मितिभावः ॥ ८ ॥

**गणयतिगुणग्रामंभ्रामंभ्रमादपिनेहते वहतिचपरितोषंदोषंविमुंचतिदूरतः॥युवतिषुचलतृष्णेकृष्णेविहारिणि मांविनापुनरपिमनोवामंकामंकरोतिकरोमिकिम् ॥ १ ॥**

नचवयं त्वां विहायान्यवधूभिर्विहरति तं किमिति त्वं वारंवारं स्मरसि सत्यं गुणवान् विलासीचेत्याह गणयतीत्यादिना हे सखि ममसनः पुनरपि वारंवारं कृष्णे काममभिलाषं करोति किमहं करोमीत्यन्वयः अनेन मानशैथिल्यमनुग्रहश्चोक्तः कीदृशे कृष्णे युवतिषु व्रजवल्लवीषुचलंती वर्द्धमानातृष्णाभिलाषोयस्य अतएव मां विना विहारिणि क्रीड़ाशीले यद्वा पूर्वं विहारिणि नेदानीं महद्दुःखमितिकीदृशं मनः वामंप्रतिकूलं विरक्तानुरागित्वात् वामत्वे हेत्वंतरमाह गणयतीत्यादि तस्य सौंदर्यादीनां गुणानां ग्रामं समूहं गणयति परिसंख्याति ननु दोषलेशमपि पश्यतीति तद्गुणस्वभावो यंवमत्वं पश्यतीत्यर्थः भ्रामंक्रोधः भ्रमाद्विभ्रमादपि नेहते न गच्छति किन्तु प्रतिदोषं तद्रष्टुं चेष्टां करोतीत्यर्थः एतेन श्रीकृष्णगुणसमूहगानेथ भावस्तन्मूलोमानश्च गत इति ध्वनितं तत्रकारणमाह तादृशेपिच परितोषं वहति किन्तु तद्दोषं मास्तेऽन्यनायिका क्रीडा संजातं दूरतः दूरादपि मुंचति त्यजति किन्तु तद्गुणानेव पश्यतीत्यर्थः तथथाअरति रिव मुपैति मां न निद्रागणयति तस्य मनोगुणान् दोषान् विगलितरजनी न संगमाशा व्रजति तनुस्तनुतांनचानुराग इति ग्रामःस्वरे संवसरे संवसथ्येवृन्दे शब्दादिरूपक इति विश्वः भ्रामः क्रोधेग्वौ दीप्तावितिच वामं सव्ये प्रतीपेचेति कामः स्मरे भिलाषेपिच १॥

## एकतालीताले मालवरागे ॥

निभृतनिकुंजगृहंगतया निशिरहसिनिलीयवसन्तम् ॥ चकितविलोकितसकलदिशारतिरभसरसेनहसन्तम् ॥ १ ॥ सखिहेकेशिमथनमुदारं रमयमयासहमदनमनोरथभावितयासविकारम् ॥ ध्रुपदम् ॥

एकतालीताले मालवरागे ॥ एकतालीत्रिधाप्रोक्तागीतशास्त्रविशारदैः।रागाश्च चन्द्रिकातद्वाद्विपुलेत्यथलक्षणम्॥द्रुतमेकंभवेद्यत्रसतालःखंडसंज्ञितः।रामातेनैकतालीतुकीर्त्यते गायकोत्तमैः ॥ रागलक्षणंतु पूर्ववदेव इदानीं विरहोत्कंठिता राधासखीं प्रत्याह निभृते त्यादिना उत्कंठितालक्षणं ॥ उद्दामभन्मथमहाज्वरवेपमाना रोमांचकंटकितमंगकमुद्वहंती ॥ संवेदवेपथुघनोत्कलिकाकुलांगीमुत्कंठितां वदतितां भरतो मुनिं इति॥ गीतार्थस्तु हे सखि मया सह केशिमथनं प्रशस्ताः केशायस्यसः केशीकामः तमथात्मसौंदर्येण मथ्नाति चोभयति केशीचासौमथनश्चतमिति अथवा नायकसामर्थ्यख्यापनाय केशिमथनपदोपादानन्तं केशिमथनं मन्मथमथनं श्रीकृष्णं रमयक्रीड़ांकारयकीदृश्या मया निभृतनिकुञ्जगृहंगतया एकान्तनिविडलताच्छादितमन्दिरमाप्तया कीदृशं निशिरात्रौ रहस्ये कान्तेनिलीय तिरोभूयवसंतं तिष्ठंतं तदवलोकनार्थं कुञ्जमन्दिरगतांमांदृष्ट्वा सा राधा मां मापश्यत्विति कुतर्कं मत्प्रतारणाय रहःस्थितमितिभावः चकितं सभयं यथा स्यात्तथा विलोकिता दृष्टाः सर्वाः समस्तादिशोयद्यावेन बालया तत्र श्रीकृष्णाभिसरंतां कृष्णोमागैमापश्यत्विति सभयं सर्वंदिक्पश्यतीतिभावः किञ्च रत्युत्साहसरभसो वेगः रसः शृङ्गाराख्यस्तेनहसंतं सुरतकालसमयार्थमत्रस्थितमपिमामियं न पश्यतीति हसन्तमितिभावः ननुमयार्थितः श्रीकृष्णोमायास्यतीत्याह उदारं उदारस्वभावं अतएव त्वहंस्थितमवश्यं दास्यतीतिभावः कीदृश्या कन्दर्पस्य मनोरथइच्छातत्पुक्तोयोभावः रत्याख्यस्तजातयाप्राप्तया वा तारकादित्वादिनच् कीदृशं मदनजनितविकार सल्लापसहितंपदद्वयेनानेन परस्परानुरागजनितः शृङ्गाररसः पुष्टोभवतीतिभावः भावितोपासने प्राप्ता इति विश्वः निभृतंसंभृतेगुप्त इति यादवः रभसोवेगउत्साह इत्यमरः विभावना विशेषावलङ्कारौ ॥ १ ॥

प्रथमसमागमलज्जितया पटुचाटुशतैरनुकूलम् ॥ मृदुमधुरस्मितभाषितया शिथिलीकृतजघनदुकूलम् २॥

पुनःकीदृश्या प्रथमसङ्गवजातलज्जया दाणे दर्शयन्नवतामुपैति तदेवरूपं रमणीय ताया इतिभावः कीदृशं पटुनायिकानुग्रहरूपाणि यानि चाटुवचनानि मधुरप्रियवचनश तानितैरनुकूलमनुग्रहकारकमनुनयपरं वा नेयञ्चतुरैरिति कविभाव चतुरानुनयः कर्तव्यइतिभावः पुनःकीदृश्या मृदुकोमलंमधुरं कर्णामृतं स्मितमीषद्धास्ययुक्तं भाषितं यस्या स्तयाकीदृशं स्मितवचनाशैथिल्यमापादितं जघनस्थितं दुकूलपट्टवस्त्रंयेन एतेननायकचूडामणिश्रीकृष्णदर्शनादेव दृढबद्धानीविस्वयमेव स्खलिता तद्वलंबित वासस्तेनापि गृहीतमिति सूचितं उक्तंभरतेन ॥ कांतेतल्पमुपागतेशिथिलतानीविस्वयंबंधनादिति उक्तंचरतिरहस्ये॥ स्पृष्टेस्फुरतास्वये प्रचलतः कंपोदरे मत्स्यवत् धम्मिल्लः कुसुमाकुलोविगलितःप्राप्नोतिचैवं पुनः ॥ प्रच्छन्नौप्रजनिस्वनौप्रकटतां श्रोणीतटं दृश्यते नीवीविस्खलितास्थितापि मुहुःकामेंगितामिति जघनंकटेऽधोभागइतिहारावली, चाटुनरप्रियोक्तिः स्यादितिरत्नमाला रसवदलंकारोपि भावनावा ॥ २ ॥

## किशलयशयननिवेशितयाचिरमुरसिममैवशयानम् ॥
## कृतपरिरंभणचुंबनयापरिरभ्यकृताधरपानम् ॥ ३ ॥

पुनः कीदृश्या किशलयशयने नवपल्लवरचिततल्पे सख्या श्रीकृष्णेन वा निवेशितया कीदृशं चिरं ममैवोरसि शयानं सुप्तं शयनमिति बहुकालालिंगनापेक्षोक्तेरिति भावः पुनः कीदृश्या कृतपरिरंभचुंबनेन यया एतेन जघनोपश्लेषणमोष्ठ चुंबनं च श्रीकृष्णस्य तयाकृतमितिभावः तद्यथा पंचशायके ॥ जघनकलितश्रोणिरंगोपरिष्टाद्व्रजति यदिह नारीलम्बकेशोत्तरीयेति चुंबनमप्युक्तं रुदन कांतस्य मुखोष्ठ युग्मं निलीय जिह्वा वितताऽस्तुप्रागमिति॥ पुनः कीदृशं परिरभ्यालिंग्यकृतं मदीयाधरपानं येन एतेन ललाटिकमाल्यलिंगनादिकमप्युक्तं यथा ॥ अन्योन्यसंसक्तमुखं कपोलं नेत्रं ललाटं हृदयं च बाहू । सानंदभावस्तमम्मीलिताक्षं ललाटिकं तत्वविदो वदंतीति ॥ कृताधरपानमिति सुरतप्रमादिदानेनाप्यपनेयम् ॥ ३ ॥

## अलसनिमीलितलोचनयापुलकावलिललितकपोलम्॥श्रमजलसिक्तकलेवरयावरमदनमदादतिलोलम् ४

कीदृश्याअलसे आलस्ययुक्ते निमीलितेमुद्रिते लोचने यस्यास्तया एतेनांगिकः कामोत्सवःकथितः यथा ॥ यत्र मूर्द्धानमारभ्यपादपर्यंतिकाः क्रियाः। अंगेनविहिता यस्मात्तस्मादांगिकमुच्यते॥ कीदृशं पुलकानांरोमांचानामावल्या पंक्त्या ललितौ मनोहरौ कपोलौ यस्यतं एतेनसात्विकभावोदयेन शृंगाररसस्यास्थिरता कथिताभरतोक्तः ॥ स्मरणे संगमे चैव प्रियस्यालोकने तथा । स्वेद कंपाश्चरोमांच ॥वैवर्ण्यं म

श्रुजलयावित्यष्टौ सात्त्विकामता ॥ कीदृश्या श्रमजलेन सुरतानंदजलेन सिक्तं संपूर्णं वा कलेवरं शरीरं यस्याः तया एतेन सुरतानंदमूर्तिरुक्ता श्रीहरिः कीदृशं उत्कृष्टकामगर्वा दतिलोलं चंचलं सदृशं वा प्रचुरश्रेष्ठयोर्वा इति विश्वः काये कलेवरमित्यपि रसवद लंकारः ॥ ४ ॥

## कोकिलकलरवकूजितयाजितमनसिजतंत्रविचारम्॥
## श्लथकुसुमाकुलकुंतलयानखलिखितघनस्तनभारम्५॥

कीदृश्या कोकिलस्य कलरवोऽव्यक्तमधुरशब्दस्तद्वत्कूजितं शब्दितं यस्याः को किलपुंस्त्वं पुरुषापिताभिप्रायादिति अनेन कूजिताख्यं वास्यरुतमुक्तं तदुक्तं पंचशाय के ॥ पिकशिखिकलहंसप्रापपक्षिप्रजानां स्तनितमनुकरोति ह्यंगनामन्मथार्ता ॥ कीदृशं जितोऽज्ञात उल्लंघितो वा मनसिजस्य कामस्य तंत्राणां वात्स्यायनाद्युक्तकामशास्त्राणां विचारः सिद्धांतो येन तत्तत्रैवोक्तं॥ आश्लेषं प्रथमंकुर्याद्द्वितीयं चुंबनं तथा ॥ तृतीयंनखा दानंच दंष्ट्राघातं चतुर्थकम् । पंचमं त्वेमनं प्रोक्तं षष्ठंप्रहरणंतथा । सप्तमं कंठशब्दश्च बंधनं वाप्यनंतरमिति ॥ तत्सर्वं विपरीतजातमितिभावःउक्तंच ॥ रतिचक्रे प्रवृत्तस्यनैवशास्त्रं न चक्रम इति पुनः कीदृश्या मयाश्लथाः शिथिलाः कुसुमैराकुला व्याप्ताः कुंतलाः केशा यस्याः कीदृशंकृष्णं नखैः विलिखितः कृतोघनो निबिडः स्तनभारो येन अलिखितपदो पादानात्पंकजपत्राख्यंनखक्षतमुक्तं यथा ॥ अत्यर्द्धमेकस्फुरितोर्द्धरेखं प्राहुः चतं पंकज पत्रसंज्ञमितितंत्रं प्रधानशास्त्रयो रितिविश्वः ॥ चिकुरः कुंतलो वालः कचः केशः शिरो रुहमित्यमरः भारोभारेच सिद्धांते भारः स्थूलेपि वस्तुर्नाति वैजयंती ॥ ५ ॥

## चरणरणितमणिनूपुरयापरिपूरितसुरतवितानम् ॥
## मुखरविशृङ्खलमेखलयासकचग्रहचुम्बनदानम् ॥ ६ ॥

एवं सप्तधालिङ्गनादिकं वाह्यरतमुक्त्वेदानीं बन्धाख्यमन्तरमाह चरणेत्यादिना की दृश्या चरणयो रणितौ शब्दायमानौ मणिप्रचितौ नूपुरौ यस्याः एतेन भ्रामरिको नाम विपरीतरतौ नायिकाकृतबन्धविशेषोदर्शितः प्रोक्तं पञ्चशायके चक्रवद्भ्रामति कुञ्चि- ताह्निकाभ्रामकर्तृजघनेसमुत्थित इति कीदृशं परिपूरितोभिपूर्णतांनीतः सुरतवितानं रतिविस्तारोयेन तं एतेन भ्रामरिकनायककर्तृको बन्धउक्तः पुनः कीदृश्या पूर्वं मुखरा शब्दायमानापश्चाद्विश्रृङ्खलात्रुटितमणिगुणशिथिलाच मेखलाक्षुद्रघण्टिका यस्याःएतेन प्रेंखोलितनामकं विपरीतरतमुक्तं स्वजघनमेव दोलायमानं सर्वत्र भ्रामयेदिति प्रेङ्खोनाम कीदृशं केशग्रहणसहितंकृतं चुम्बनदानं येनयस्येति वा इदमपि विपरीतरतमेव तथोक्तं॥

श्रृङ्गारे पुंस नार्या श्रृङ्ग

लकुमुदेकांच्या वक्षेच कचबन्ध इति विश्वः मेखलाखड्गबन्धेस्यात्कञ्चीशैलनितम्बयो रिति ॥ ६ ॥

रतिसुखसमयरसालसयादरमुकुलितनयनसरोजम् ॥
निःसहनिपतिततनुलतयामधुसूदनमुदितमनोजम् ७ ॥

एवं स्वोत्कर्षमुक्त्वा तज्जनितरताधिक्यमाह रतिसुखेत्यादिना पुनः कीदृश्या मया रतिसुखसमये सुरतसुखकाले योरसोनुरागः सुरतश्रमेण निद्रारूपो वा उद्भटशृङ्गाररूपोवा तेनालसया आलस्ययुक्तया मन्थरया वा कीदृशी ईषन्मुद्रितेऽर्द्धोद्घाटितेवामंथरे नेत्रकमलेयस्यतं अनेनोभयोः सुरतानंदावाप्तिर्जातेतिध्वनिः तदुक्तं रतिरहस्ये॥ मूर्च्छानामीलनंवादयोरतिकालस्य लक्षणमिति ॥ कीदृश्या निःसहासमर्था किशलया पुष्पशयने निपतितातनुलता शरीरलतायस्याः एतेनैवसुरतांतविरतिरुक्तायथाभरते॥अंगस्वेदः रखथत्वंचकेशवस्त्रादिसंस्तृतिः।जातेच्युतिसुखेनास्यीविरामेच्छावजायतइति॥पुनःकीदृशं मधुसूदनेमभाधरपानकर्तरि दैत्यसूदनेवामुदितानंदं प्रापितोमनोजकंदर्पोयेन उक्तं रतिरहस्ये ॥ अवसानेपिचप्रीतिरुपचारैरुपस्कृता । सविश्रंभकथयागैरतिंजनयतेपरामिति ॥ किंचपुञ्अभिषवे इतिधातुः अत्राभिषवः श्रीराधाधरामृतखण्डनमितिज्ञेयं मधुसूदनपदं दैत्य परंप्रसिद्धं रसवदलंकारः ७ ॥

श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधुवनशीलम्॥
सुखमुत्कंठितगोपवधूकथितं वितनोतुसलीलम् ८ ॥

इदंजयदेवेनकविनाभणितं श्रृण्वतां पठतां सुखंवितनोतु विस्तारयतु अतिशयेन मधुरिपुनिधुवनशीलं श्रीकृष्णसुरतक्रीडास्वभावोयत्र कीदृशंसुखं उत्कंठितयागोपवध्वा श्रीराधया कथितंभाषितं सलीलं श्रृंगारविलासलीलासहितं अनेन व्रजवधूवृंदैरना स्वादितं श्रीराधासुरतमितिभावः ॥ ८ ॥

हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवीवृंदोत्सारिदृगंतवीक्षितमतिस्वेदार्द्रगंडस्थलम् ॥ मामुद्वीक्ष्यविलज्जितस्मितसुधामुग्धाननंकानने गोविंदंव्रजसुन्दरीगणवृतंपश्यामिहृष्यामिच ॥ १ ॥

श्रीकृष्णोत्कंठयासख्या नीतयाराधयातया उत्सरितवधूवृंदे स्वःकृष्णोगतिरिम इदानींसख्यानीयमाना राधामुत्तलिंगसत्रसं श्रीकृष्णंप्राप्यपराङ्मुत्य स्वागतंसखीमाह हस्ते

तिष्ठेसखि अहंगोविंदं काननेपश्यामिद्रक्ष्यामिचदृष्ट्वाहर्षंकरोमि कीदृशं व्रजसुन्दरीगणावृ
तंनत्वन्यस्त्रीगणावृतं दृष्ट्वाकथंतेहर्षं इत्यतआहमामुद्वीक्ष्यदृष्ट्वाविलज्जितं अन्यगोपीगणावृ
तोऽहमनयादृष्टइतिसंजातलज्जं अथवालज्जासहितं यत्स्मितंतदेव सुधामृतमुज्ज्वलत्वात्
स्पृहणीयत्वाद्वातथा मुग्धंसुन्दरमाननंमुखंयस्यतं ललाटवर्त्तीकृत्वांगुलिभंगमाहताहृगा
ननं पश्यंत्याः कस्यामंदभाग्यायानानंदोभवेदितिभावः किंचयुवतिगणावृतोप्यात्मानंसा
पराधमिवमन्यमानोमत्तोबिभेतीतिमेहर्षं इतिभावः पुनःकीदृशं हस्तान्मर्दनेनमद्भयेनवा
स्रस्तः स्खलितोविलासवंशः क्रीड़ावेणुर्यस्यतं अधरामृतपानापराधीवंशोपिमद्भयात्पति
तइतिध्वनिःपुनःकीदृशंअनृजुः कुटिलाभ्रूलतायासांव्रजवल्लवीनां गोपस्त्रीणांवृन्दमुत्सार्य
त्यपसारयति तदृगन्तं नेत्रप्रान्तं वीक्षितमवलोकितं यस्यतंमामागतां दृष्ट्वा मद्भयाद्दृ
गन्तक्षेपैरन्यगोपीरपसारयतीत्यर्थः पुनःकीदृशं अतिशयेन प्रस्वेदेनार्द्रं गण्डस्थलं यस्य
तं अनेनमद्दर्शनादेवाङ्गेसानन्दोजात इतिध्वनिः सानुकूलश्चनायकः प्रेङ्खोनामायमलङ्कारः
तल्लक्षणं प्रतिप्रकाशनं यत्रतत्प्रेङ्खमभिधीयत इति दृष्ट्वा लज्जितमितिभावोक्तः मामुद्वी
क्ष्येतिसर्वत्र ॥ १ ॥

**दुरालोकस्तोकस्तवकनवकाशोकलतिकाविकाशः कासारोपवनपवनोपिव्यथयति ॥ अपिभ्राम्यद्भृंगीरणित रमणीयानमुकुलप्रसूतिश्चूतानां सखिशिखरिणीयंसुखयति ॥ २ ॥**

सखिधैर्यमावहमिलिष्यत्येव श्रीकृष्ण इत्याश्वासयंतीं सखीमत्याह दुरालोकेति हे
सखिदुरालोके दुःखेनआलोकयितुंशक्यः स्वभावेनापिस्तोकोल्पस्तवकोगुच्छोयस्याः सा
नवकानवाऽशोकलतिकाशोकशाखा तस्याविकाशः प्रकाशः किंचकासारः सरसी उपव
नंचतयोः पवनोपिकमलाकरसरोवायुरपिव्यथयति पीड़ांकरोति मामितिशेषः कासारो
पवनाभ्यासेत्यसौगंध्यमांद्यानीतिध्वनिः किञ्चेदंचूतानामाम्राणां श्रीगोवर्द्धनगिरौस्थि
तानांमुकुलप्रसूतिः कुड्मलोपिनसुखयति नसुखंकारयति किंप्रकारदशायां करिष्यतीतिन
वेद्मि कीदृशी शिखरेमौलौवर्त्तमानाद्दूरादेव दुःसहेत्यर्थः पुनःकीदृशी भ्राम्यंतीनांभृंगीनां
भ्रमरांगनानांरणितैर्गुंजितैः रमणीयामनोहरास्तोकोल्पकइतिविश्वः गुच्छकस्तवकइत्य
मरः कासारः सरसीसर इत्यपिभ्रमरः(?) रत्नेमल्लिकायां शिखरिणी आम्रश्चूतोरसाल इत्य
मरः कुड्मलोमुकुलोस्त्रियामित्यपि हेतूक्तिरलङ्कारः ॥ २ ॥

**साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितभ्रूव**

लीकमलीकदर्शितभुजाबालार्द्धहस्तस्तनम् ॥ गोपीनांनि भृतंनिरीक्ष्य गमिताकांक्षश्चिरंचिंतयन्नंतर्मुग्धमनोहरो हरतुवःक्लेशंनवःकेशवः ॥ ३ ॥

## इतिश्रीगीतगोविंदेक्लेशकेशवोनामद्वितीयःसर्गः ॥ २ ॥

सर्गांते श्रोतॄन्प्रति कविराशिषमाशास्ते साकूत इत्यादिना केशवो हरिर्वः युष्मा कं क्लेशं दुःखं हरतु कीदृशः नवस्तरुणो नूतनोवा नानामाधुर्योदयात् पुनः मुग्धमनोहरः सुंदरसुंदरः मुग्धायाः राधायाः मनोहरणाचम इति वा पुनः कीदृशः गमिताकांक्षः गमि ता नीता श्रीराधायां कांक्षा अभिलाषो येन किंकृत्वा किंकुर्वन् गोपीनां निभृतं गुप्ताभि प्रायं निरीक्ष्य कांचिद्वल्लभाश्चिरंमनसि चिरंचिंतयन् कीदृशं निभृतं साकूतं साभिप्रायं स्मितमीषद्धास्यं यत्र आकुलाकुलोस्तव्यस्तगलद्धम्मिल्लः केशपाशोयत्रतं उल्लासितभ्रूव ल्लीकं उत्क्षिप्तभ्रूवल्लीकं जृंभमानव्याजेनेत्यर्थः अलीकेनाऽनिमित्तेन दर्शिता भुजामूलार्द्धं बालार्द्ध इतिपाठः हस्तः स्तनायत्र भुजाश्च बालाश्च हस्ताश्च स्तनाश्चेति द्वंद्वः। साकू त समये प्रोक्तं साकूतं भावमीक्षणं इति मेदिनीकारः ॥ निभृतंतु रहस्येस्यान्निभृतं गुप्त मुच्यत इतिधरणिः ॥ अलीकंकपटेप्रोक्तमलीकंगुप्तभावकम्। अलीकमनिमित्तंच वृथा भाषणक इति हलायुधः ॥ धम्मिल्लःकेशपाशेस्यादिति वैजयंतीरसनदखंकारः॥ श्रीराधा दर्शनादेवगतक्लेशोधभानसम्। पुलकोल्लासरुचिरःक्लेशंहरतुकेशवः। वंदेव्रजपतिंदेवं माध वेव्रजवधूप्रियम्। यमुनातीरनिकुंजेष्टपभानुसुतारतम् ॥ ३ ॥

इतिश्रीमत्कृष्णचंद्रसेवकोदीच्यावतंस शिवदासात्मजश्रीवनमालिभट्टविर चितायांश्रीवनमालिसंजीविन्यां गीतगोविंदटीकायांक्लेशकेशवोना मद्वितीयःसर्गःपष्ठःप्रबंधः ॥

कंसारिरपिसंसारवासनाबन्धशृंखलाम्। राधामाधा यहृदयेतत्याजवृजसुंदरीः ॥ १ ॥

एवंसर्गद्वयेनोक्ता श्रीराधोक्तिर्हरौपरा। तृतीयेत्वथकृष्णेन तस्यांगुर्वीनिरूप्यते ॥ श्रीराधायाः श्रीकृष्णस्यापि श्रीराधायां गुर्वीमाह कंसारीत्यादि कंसुखं विषयजन्यमप सारयति निजानंदप्रदानेन निजस्वच्छस्वरूपप्रदर्शनेनवा सकंसारिः संसारजन्यसक लसुखविस्सारक इत्यर्थः ईदृशोपि श्रीराधांहृदये आधायारोप्य व्रजंतीति व्रजा युवति समूहास्त एव सुंदरी सौंदर्यवतीरपि स्यक्तवान् ससरतीति ससार

रूपस्तस्यबंधाय श्रृंखलामिव श्रृंखलांयथा कश्चिद्बद्धः कारागृहे राधायां सिद्धिप्राप्य हृदये तामाधाय तद्बलेन श्रृंखलांनिगडंत्यजति तद्वत् अथवा संसारवासनाभोगसंस्कारकपालस्यांबंधस्तस्यकामभूर्तिकर्त्रीमिवान्वहिः कश्चिद्वासनापूर्वाचाभिलाषंकरोति अथवा सम्यक्सारः संसारः प्रणयरसः श्रीकृष्णो वा तस्मिन्वासनाबंधाय श्रृंखलावेणाविव परमानन्दप्रदत्वात् ॥ श्रृंखलापुंस्कटी वस्त्रबंधेपिनिगडे चेतिविश्वः॥संसारः स्यात्तुजगति तथा संसरतेपि सारभूतेपिचक्षेमखण्डः॥ संस्कारे वासनाप्रोक्ता वासनास्त्ववरोधन इति हलायुधः॥ सुंदरीरमणी रामेत्यमरः॥श्रृंखलाकुमुदे कांच्यावक्षेचकचबन्धन इतिविश्वः१॥

**इतस्ततस्तामनुसृत्यराधिकामनंगबाणव्रणखिन्नमानसः । कृतानुतापःसकलिन्दनन्दनीतटान्तकुंजे निषसादमाधवः ॥ २॥**

व्रजसुन्दरीस्तत्याजेति यदुक्तं तदेव श्रीकृष्णचेष्टितसंतापमाह इतस्ततेति समाधवो मधुप्रियः कलिंदनन्दिन्या यमुनायाः तटांतकुंजे तीरसमीपलतापिहितोदरे निषसाद क्लेशाभरेण तत्प्रणयभरेण वा विषण्णो बभूव किंकृत्वा इतस्ततस्तेषु कुंजेषु तां श्रीराधा मनुसृत्यान्वेष्य तत्रहेतुः अनंगस्य कामस्य ये बाणाः संमोहनादयस्तेषां व्रणैः क्षतैर्विपन्नं विषादयुक्तं मानसं यस्य सः कीदृशः कृतोनुतापः कथंमया पूर्वमेव नरुद्धेत्येवं पश्चात्तापो येनसः श्लोकद्वयेनानेनोभयोस्तुल्योनुरागः प्रदर्शित इति कंदर्पोदर्पकोऽनंग इत्यमरः प्रेमस्वभावोक्तिरलंकारः ॥ २ ॥

## गुर्जरीरागेप्रतिमठताले ॥

**मामियंचलिताविलोक्यवृतंवधूनिचयेन ॥ सापराधतयामया ननिवारितातिभयेन ॥ १ ॥ हरिहरिहतादरतयागतासाकुपितेव ॥ ध्रुपदम् ॥**

श्रीकृष्णानुतापमेव गीतेन दर्शयति मामिति गुर्जरीराग ध्रुवपदं तल्लक्षणं पूर्ववत् हरिहरीति महत्कष्टं साराधा हतादरतया अनादरेण कुपितेव गता ननुकुपिते गतेति त्वयाकथं ज्ञातमित्यतआह वधूनिचयेन गोपस्त्रीसमूहेन वृतं वेष्टितं मांविलोक्य इयंचलिता ननुसागच्छन्ती किमिति त्वया न निवारिता सापराधतया अपराधो राधां विहायान्यवधूक्रीडारूपस्तद्युक्तयामया अतिभयेनातिशयभीत्या ननिवारिता मात्रान्यूनिरलंकारः हरिहरिकष्टेऽद्भुतेचेतियादवः ॥ १ ॥

किंकरिष्यतिकिंवदिष्यतिसाचिरंविरहेण । किंजनेन धनेनकिंममकिंगृहेणसुखेन ॥ २ ॥

किञ्च साराधा चिरं चिरकालं विरहेण वियोगेन किङ्करिष्यति किंवदिष्यति ममदोषं वा वदिष्यति नच गोपवधूनिकरं विहाय तस्याभावग्रहस्तत्राह किञ्जनेनेति श्रीराधाविना मम गोपवधूनिचयेनान्यजनसमूहेन वापि जनेन किंतद्विरहे धनेन तत्कृत विचित्रभोगाभरणादिनावा किंनतु धनमन्तरागृहसौख्यं नस्यात्तत्राह गृहेण किंममगृहेण किंतद्वियोगे सैवगृहमित्यर्थः ननुगृहं विनासुखं कथंस्यात्तत्राह तद्विरहे गृहसुखेन किं सैव ममसुखरूपेतिभावः इयं स्मृत्याख्यावस्थोक्ता ॥ २ ॥

चिन्तयामितदाननंकुटिलभ्रुरोषभरेण ॥ शोणपद्म मिवोपरिभ्रमताकुलंभ्रमरेण ॥ ३ ॥

एवं तांविनाधनादीनां दुःखदत्वमुक्त्वा इदानीं कुपितायास्तस्याआननं चिन्तनं मे जीवनमिति दर्शयति चिन्तयामीति अहं तदाननं चिन्तयामि स्मरामि कीदृक् रोषभरेण कोपातिशयेन कुटिले वक्रे भ्रुवौयत्रकिमिव उपरिभ्रमता सञ्चरता भ्रमरेणाकुलं व्याकुलं शोणपद्ममिवरक्तकमलमिव अनेन कोपारक्तं मुखं पद्मसादृश्यं भ्रुवोर्भ्रमरोपमाचेति शोणः कोकनदः छविरित्यमरः एतेन माधुर्यमुक्तम् ॥ ३ ॥

तामहंहृदिसंगतामनिशंभृशंरमयामि ॥ किंवनेनुसरामितामिहकिंवृथाविलपामि ४ ॥

तामेवमाधुर्य्यंतामाह अहंतां राधामनिशंवारंवारंभृशमतिशयेन रमयामि क्रीडयामि कीदृशीं हृदि हृदये सङ्गतां सन्निहितां किमिहवनेऽनुसरामि तस्यानुसरणंकरोमि इहवनेवा किंवृथाविलपामि किमर्थकिमिति वृथाविलापंकरोमि हृदयसन्निहितत्वात् नहिनष्टंवनेमृग्यते ॥ ४ ॥

तन्विखिन्नमसूययाहृदयंतवाकलयामि ॥ तन्नवेद्मि कुतोगतासिनतेनतेनुनयामि ५ ॥

तं हृदिविभाव्य स्वापराधंक्षमापयति तन्वीति विरहकृशांगितवहृदयमसूययामयि दोषारोपणेन खिन्नमाकलयामिजानामि सहजापराधभयमपि किमेतत्खेदमित्युद्वेगावस्थोक्ता यथा यस्मिन् रम्यमरम्यं वा स्यात्तद्दर्शिय किञ्चनेत्युद्वेग इति किञ्च सापराधेन मयातव प्रार्थनायुक्तातन्नवेद्मीति त्वंकुतो हृदयान्निर्गतासि तन्नवेद्मि तेन हेतुना ते तुभ्यंना

नुनयामि अन्वेषणं न करोमि यद्वानुवित्तैतत्सम्बन्धेपक्षी एतेविलाप्यवस्थोक्ता उक्तं श्रृङ्गारेवभ्रमीति मनोयास्मिन्निति ॥ ५ ॥

**दृश्यसेपुरतोगतागतमेवमेविदधासि ॥ किंपुरेवससं भ्रमंपरिरंभणंनददासि ६ ॥**

संप्रतिभावनयालक्षीकृत्य तां प्रत्याह दृश्यसइति पुरतोग्रे गतागतंयातायातं विद धासीति दृश्यसे हेसुंदरिपुरेवपूर्वमिवभ्रमेमम संभ्रमं सादरं परिरंभणमालिंगनं किमिति न ददासि पुराऽग्रे अयंभावः अंतर्बहिर्वर्तमाना सहसैवादृश्या कथंभवेदिति ६ ॥

**क्षम्यतामपरंकदापितवेदृशंनकरोमि । देहिसुंदरिद र्शनंममसन्मथेनदुनोमि ॥ ७ ॥**

पुनश्चध्यानेन प्राप्तामिव ज्ञात्वा क्षमापयति तवेदृशं विप्रियं कदापिकदाचिदपि न करोमि न करिष्यामि इति अपरमपराधंक्षम्यतां क्षमस्व इयमुन्मदावस्थोक्ता पु नर्जातविवेकः कथयति ममदर्शनंदेहि यतोहं मन्मथेन कामेन दुनोमि संतप्तो भवामि अपराधबाहुल्यान्ममेति पक्षी अथवा मन्मथो मामेवदहतु न तुत्वामिति त्वदर्थमेवं जी वनमिति स्नेहपराकाष्ठा दर्शिता अत्राप्युन्मादावस्थोक्ता अन्यस्मिंस्तदिति भ्रांति उन्मा दोविरहोद्भव इति भ्रमोत्रालंकारः संभ्रमः स्नेहहर्षयोरिति विश्वः ॥ ७ ॥

**वर्णितंजयदेवकेनहरेरिदंप्रणतेन । किन्दुबिल्वसमुद्र संभवरोहिणीरमणेन ॥ ८ ॥**

तदर्थं संग्रहेणाह वर्णितमिति स्वार्थेकः जयदेवकेन इदं हरेश्चरितं वर्णितं कीदृशे न प्रणतेन हरिपरायणेन पुनः कीदृशेन किंदुबिल्वं नाम जयदेवगोत्रं कुलं ग्रामोवा सए व समुद्रस्तत्रभवो यस्य तादृशेन रोहिण्याः पद्मावत्याः रमणेन चन्द्रेणेव यथा समुद्रा दुत्पन्नः रोहिणीरमणश्चन्द्रस्तथा किन्दुबिल्वोत्पन्नो जयदेव इति चन्द्रपक्षे रोहिणी प्र सिद्धा ॥ सुन्दरीरोहिणीप्रोक्ता चन्द्रभार्याचरोहिणी ॥ नन्दभार्याच वसुदेवांगनाचेति विश्वप्रकाशः उत्प्रेक्षारूपोलंकारः ॥ ८ ॥

**हृदिविसलताहारोनायंभुजंगमनायकः कुवलयदल श्रेणीकंठेनसागरलद्युतिः । मलयजरजोनेदंभस्मप्रियार हितेमयिप्रहरन्हरभ्रांत्यानंगक्रुधाकिसुधावसि ॥ १ ॥**

श्रीराधांस्वापराधमुक्त्वामदनं प्रत्याह हृदीत्यादि हेऽनंगांगक्लेशानभिज्ञ हरभ्रांत्या श्रीकृष्णमेव मयि न प्रहर प्रहारं कुरु किंच कुत्राक्रोधेनकिमिति धावसि कीदृशे मयि प्रियारहिते श्रीराधाविरहिते तद्विरहादेवाहं संतप्तस्त्वंस्तमारणंकिमिति करोषीतिभावः हरभ्रमोपिन संभवासहितोहं प्रियारहित इति भ्रमबीजमपिनिरस्यति हृदयंविसलताया मृणालस्य हारस्तद्विरहगात्यैधृतोनभुजंगमनायकः सर्पराजोवासुकिः किंचेयं कुवलयदलश्रेणी नीलकमलपत्राणां पंक्तिस्तापशांत्यै धृता साग्रलग्नतविषकान्तिर्नकिंचायं मलयजरजश्चन्दनरेणुः नेदंभस्मविभूतिः तद्विरहवशात्सर्वेषां वैपरीत्यजातमिति भावः भ्रान्तिनामायमलंकारः सएवायमित्युन्मादः ॥ १ ॥

**भ्रूपल्लवंधनुरपांगतरंगितानि बाणागुणःश्रवणपालि रितिस्मरेण । तस्यामनङ्गजयजङ्गमदेवतायामस्त्राणि निर्जितजगंतिकिमर्पितानि ॥ २ ॥**

ननुश्रीराधाकटाक्षादिस्मरणादेवतद्दुःखंकोवैकामस्यापराधस्तत्राह भ्रूपल्लवमितिकिमित्ययंसंदेहे आक्षेपेवा तस्यां श्रीराधायांस्मरेकामेनास्त्राण्यर्पितानि स्थापितानीति तर्कयामिकिंवाऽन्यर्थमर्पितानि तत्कटाक्षैरेवजगज्जितमितिध्वनिः कीदृशानिनिर्जितानि जगन्तियैस्तानिकिंचतैरेवास्त्रैर्जगत्त्रयं जितंतस्यामिवदत्तानीतिभावः किमित्यन्यत्रनस्थापितानितत्राह अनंगस्य कामस्यजयाजयायगमनशीलदेवतायां तद्वशीकरणाधिष्ठात्र्यामिति सूचितंतानिकानीत्यपेक्षायामाह भ्रूपल्लवमेवधनुःनीलस्निग्धत्वात्अपांगतरंगितानिगतागतकटाक्षाबाणाः श्रवणपालितःकर्णप्रांतएवगुणःप्रत्यंचाइति रूपकालङ्कारः ॥ २ ॥

**पाणौमाकुरुचूतसायकममुंमाचापमारोपय क्रीडानिर्जितविश्वमूर्छितजनाघातेनकिंपौरुषम् ॥ तस्याएव मृगीदृशोमनसिजप्रेंखत्कटाक्षानलज्वालाजर्जरितं मनागपिमनोनाद्यापिसंधुक्षते ॥ ३ ॥**

पुनःकामोऽस्मान्ताडयिष्यतीतिभयेन कुसमाशिलिख्यैर्दैन्यं करोतिपाणाविति हेमनसिजमदन अमुंचूतसायकमंजरीपाणौ माकुरुकिंच चापंधनुःआरोपय क्रीडमालीलया नितरांजितंविश्वंयेनतत्संबुद्धिः मूर्छितानांजनानांघातेन मारणेनकिंपौरुषंपुरुषार्थः कुत्सितंवापौरुषमपितुनतस्या श्रीराधायाएवमृगीदृशः हरिणीदृशःप्रेंखतःप्रसरंतोयेकटाक्षाएवाशुगाबाणास्तेषांश्रेणिभिः पंक्तिभिर्जर्जरितंखंडनीतं ममनोवापिमनागीषदपि

नसंभुज्यतेनस्वस्थंभवति किंचविषमेषोर्मनसिजस्यैतदनुचितमितिभावः किंचलीलया विश्वंजितं येनतस्यजनेषुप्रहरणं यशोहानिर्नचपुरुषार्थं इतिध्वनिः सायकःशरखड्गयो रितिविश्वः अथास्त्रियांधनुश्चापावित्यमरः आशुगोमारुतो बाणइतिविश्वः श्लेषनामालङ्कारः ॥ ३ ॥

**भ्रूचापेनिहितःकटाक्षविशिखोनिर्मातुमर्मव्यथांश्यामात्माकुटिलःकरोतुकवरीभारोपिमारोद्यमम् ॥ मोहंतावदयंचतन्वितनुतांबिंबाधरोरागवान् सद्वृत्तस्तनमंडलस्तवकथंप्राणैर्ममक्रीडति ॥ ४ ॥**

श्रीराधाङ्गविलासस्मरबाणरूपाणि माव्यथयन्ति कामस्तु निमित्तमात्रमेव तमपि विहाय भावनयाग्रेस्थितांश्रीराधांसंबोध्याह भ्रूचापेति हेतन्विकृशाङ्गि तव भ्रूचापे धनुषि निहितोर्पितः कटाक्षविशिखःकटाक्षरूपोबाणो मममर्मव्यथां मर्मपीडां तावत्प्रथमंनिर्मातुंकरोतु वा बाणस्य प्राणापहरणमेवोचितमितिभावःकिञ्च कवरीभारोपि वेणीसञ्चयोपि कन्दर्पनिवासत्वान्मारोद्यमं वियोगिनां मारणाय कामस्य चोद्यमयुपायं मत्प्राणहरणंवाकरोतुतत्रहेतुः श्यामात्माकुटिलश्चयोंतर्मलिनःकुटिलश्चभवति सोन्यत्रन्यायप्रवर्ततइत्युचितमेवाङ्गव्यथाजनकत्वात् किञ्च अयंबिम्बाधरो बिम्बफलतुल्योरधरोपि मोहंमूर्छांतनुतांविस्तारयतु बिम्बायाः बुद्धिहारित्वं प्रसिद्धमेव सद्योबुद्धिहराबिम्बेति एतदपियुक्तं तत्राप्ययंरागवान्रागआरक्ततानुद्वेगोवा तद्वान्यो रागवान् सः परप्रतारणाद्यंकरोत्येव किञ्च सद्वृत्तः साधुवर्तुलःस्तनमण्डलः कुचाभोगमप्राणैः कथमिति क्रीडति प्राणनाशङ्करोति सद्वृत्तस्य परप्राणपीडनमनुचितामिति विरोधनामायमलङ्कारः विशिखस्तोमरेशरा इतिविश्वः श्यामं निन्दितकृष्णयोरिति धरणिः आत्मादेहमनोब्रह्मस्वभावधृतिबुद्धिष्विति विश्वप्रकाशः कवरीकेशपाशं इत्यमरः मारोमृतोविसेऽनङ्गेपिच बिम्बफले बिम्बायाःप्रतिबिम्बमण्डल इति रागोनुरक्तोमात्सर्ये इति च चरिते वर्तुलेदात्तमिलिशाश्वत ४

**तानिस्पर्शसुखानितेचतरलाःस्निग्धादृशोर्विभ्रमास्तद्वक्त्रांबुजसौरभंसचसुधास्यंदीगिरांवक्रिमा॥ साबिम्बाधरमाधुरीतिविषयासंगेपिमन्मानसं तस्यांलग्नसमाधिहंतविरहव्याधिःकथंवर्तते ॥ ५ ॥**

इदानीं नतस्याः स्मरस्यच कोप्यपराधस्तदंगसंगाभावान्मेचेतसि दुःखमिति भा- नयाग्रेस्थितां दृष्ट्वातामाह तानीतिस्पर्शसुखानि तदंगस्पर्शसंभवानि तानिपूर्वमनुभूता न्येव एतेन त्वगिंद्रियसुखमुक्तं किंच दृशः चक्षुषोर्विभ्रमा विलासास्तरलाश्चंचलाः स्नि ग्धाः प्रेमगर्भितास्तएव मयानायिकायामनुभूताः पूर्वं ये एतेन चक्षुर्विषयसुखमप्युक्तं किं च तस्याः वक्त्रांबुजसौरभं मुखपद्मामृतसौगन्ध्यं तदेवयत्पूर्वमनुभूतं एतेन घ्राणजुक्तः किं च गिरांवचसां वक्रिभावः सएव कीदृशः सुसाध्यं अमृतइवयुक्तः एतेन नायिकायाः सश ब्दमाधुर्यमुक्तं किंच साबिंबाधरमाधुरी बिंबसदृशस्योष्ठस्य माधुरी मधुरतासैव या पूर्व मनुभूता तस्याः एतेन लावण्यमाधुर्यमुक्तं इत्येवं प्रकारेण स्पर्शादिपंचानां विषयासं गेपिसांनिध्येपि तस्यां श्रीराधायां मानसं मम मनः लग्नसमाधिप्रसैकाग्रं चेत्तथापि हंतखेदे महत्कष्टे वा विरहव्याधिर्वियोगरोगः कथं किमितिवर्द्धते भ्रामश्चायमलंकारः रूपरसगंधस्पर्शकाश्च विषया इत्यमरः ॥ ५ ॥

**तिर्यक्कंठविलोलमौलितरलोत्तंसस्यवंशोच्चरद्गीतस्था नकृतावधानललनालक्षैर्नसंलक्षिताः । संमुग्धंमधुसूद नस्यमधुरेराधामुखेंदौमृदुस्पंदंकंदलिताश्चिरंददतुवः क्षे मंकटाक्षोर्मयः ॥ ६ ॥**

**इतिश्रीगीतगोविंदेमुग्धमधुसूदनोनामतृतीयःसर्गः३ ॥**

तत्रभत्याशिषमाशास्ते तिर्यक्कंठेति मधुसूदनस्य दैत्यनाशकस्य मधुपानकर्तुर्वा कटा क्षोर्मयः कटाक्षसिंधुतरंगाः वोयुष्माकं क्षेममभीष्टं ददतुप्रयच्छन्तु कीदृशाः राधामुखेंदौ राधामुखचन्द्रे मृदुईषत्स्पंदचलनंतेन प्रेम्णाच कंदलिताः प्ररूढाः कीदृशे सुमुग्धमधुरे सु ष्टुमुग्धंतन्मधुरं यत्र कीदृशाः वंशाउच्चरत्सुवेणोर्निर्गच्छन्सुगीतस्थानेषु गानपदेषु कृता वधानैर्दत्तचेतोभिर्ललनालक्षैर्गोपवधूसमूहैर्नसंलक्षिता नज्ञातदृष्टावा कीदृशस्य तिर्यक् त्रिभंगलक्षितः कंठोयस्य विशेषेण लोलश्चपलमौलिः शिखिशिखा समूहो मुकुटीकृतो यत्रतरलौचंचलौ उत्तंसौयस्य कर्मधारयः रूपकालंकारः गीतिगानमुभेसम इत्यमरः ॥ उत्तंसः कर्णपूरेपिसुंदरेनायकेपिचेतिधरणिः ॥ कंदलंतुनवांकुरः ऊर्मिः पीड़ालवोत्कं तिच ॥ श्रीराधिकावियोगाधिव्याकुलं व्रजमोहनं । भजामिपरमानंदं वल्लवीगण संवृतम् ॥ ६ ॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंसशिवदासात्मजवनमालिभट्टकृतायां

टीकायांवनमालिसंजीविन्यांश्रीगीतगोविन्देटीकायांमुग्धमधुसूदनो

नामतृतीयःसर्गःसप्तमःप्रबन्धः ॥ ७ ॥

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ॥ प्राहप्रेमभरोद्भ्रांतं माधवंराधिकासखी ॥ १ ॥

तृतीयेविरहावस्था कृष्णस्योक्ताप्रियांप्रति । चतुर्थेविरहावस्था तस्यास्तंप्रतिवर्ण्यते ॥ रहःकामोधिकोयस्याः साराधिका तस्सखी वासन्ती माधवं श्रीकृष्णंप्रत्याह वक्ष्यमाणमूचे कीदृशं प्रेमभरेण प्रेमाधिक्येनोद्भ्रांतं चेष्टाशून्यं तद्ध्याननिष्ठंवा उद्विग्नंवा एतेनोद्वेगावस्था अत्रक्रिया मन्दचेष्टावशानुरागताचोक्ता कीदृशं यमुनायाःतीरेवानिकुञ्जे वेत्रलतागृहे मन्दंस्वैरं अमन्दंसवेगंवा आसीनं कथम्मदनुग्रहं करिष्यतीतिभावः यमुनातीरवानीरनिकुञ्जपदैःकृतान्तभगिनीदाहाधिक्यान्वेषणकामाधिकताक्रमेणसूचितं मन्दः खलेमन्दगतौ मूर्खं इति विश्वः वानीरंवेतसेप्रोक्तं जाम्बुक इति शाश्वतःरसवदलङ्कारः प्रशंसायांकः कर्णाटरागएकतालीताले रागलक्षणं ॥ कृपाणपाणिर्गजदन्तपत्रमेकंवहन्दक्षिणकर्णपूरे । संस्तूयमानःसुरचारणौघैः कर्णाटरागःशिखिकण्ठनीलः ॥ तालक्षणम् पूर्वमेवोक्तं ॥ अत्रच नायिकालक्षणम् ॥ वासकशय्यासमुत्कण्ठा स्वाधीनभर्तृकातथा । कलहांतरिताचापि विप्रलब्धाभिसारिका ॥ खण्डिताप्रोषितावापि नायिकाश्चाष्टसंमता ॥ तत्रसमुत्कण्ठितालक्षणम् ॥ भरतेसमुचितेप्यहिप्रवासोनैवनल्लभः । सात्मरागलक्षसंलग्नाविरहोत्कण्ठितामतेति ॥ १ ॥

कर्णाटकरागेएकतालीताले ॥

निन्दतिचन्दनमिन्दुकिरणमनुविन्दतिखेदमधीरम् ॥ व्यालनिलयमिलनेनगरलमिव कलयतिमलयसमीरम् ॥ १ ॥ साविरहेतवदीनामाधवमनसिजविशिखभयादिवभावनयात्वयिलीना ॥ ध्रुवपदम् ॥

सख्युक्तं गीतेन दर्शयति निन्दतीत्यादिना हेमाधवमधुरिपु सातवविरहे विश्लेषे दीना दुःखिताएव दाहकत्वात् चन्दनं इन्दुकिरणांच निन्दति अधीरं बहुखेदं कष्टमनुनिन्दति प्राप्नोति त्वद्विरहे दाहकोपि दाहकत्वे जातइतिध्वनिः किंच न पर्वतवायुं मर्पति वासस्य संसर्गेण साविषमिव कलयति मन्यते कीदृशी कामबाणभयात् त्रासत इव भावंच प्रियंप्रतीति भावनाध्यानं तेनत्वयिलीना लग्ना कामबाणा मामेव दहन्तु न मत्प्रियमिति ध्यानंकवचत्वेन करोतीतिभावः ॥ शंबरारिर्मनसिज इत्यमरः॥ धीरस्तु कुंकुमेस्वल्पे त्रुषैधैर्यवतीतिविश्वः ॥ गरलं विषपाने गरलं त्रिमूलके इत्यपि ॥ व्यालो भुजंगमेक्रूरे स्वापदेदंतिनीति विश्वः ॥ उत्प्रेक्षोपमालंकारः ॥ १ ॥

अविरलनिपतितमदनशरादिवभवदवनाय विशाल
म् ॥ स्वहृदयमर्मणिवर्मकरोतिसजलनलिनीदलजा
लम् ॥ २ ॥

हेकृष्णभवतोरक्षणाय जलाहितं कमलनाय पत्रसमूहं स्वस्यहृदयरूपे मर्मस्थाने विशालं विस्तीर्णं वर्मं कवचं करोति कस्मात् अविरलं निरंतरं यो निपतितो मदन शरः कामबाणस्तस्मादिव पूर्वंत्वयि लीनाप्यशान्तिमलभमाना हृदयेत्वद्रक्षणार्थं कव चंकरोतीतिभावः अनेनस्नेहाधिक्यं दौत्यनिपुणाचोक्ता उत्प्रेक्षालंकारः अवनंरक्षणे प्रीताविति विश्वः ॥ २ ॥

कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयम् ॥
व्रतमिवतवपरिरम्भसुखायकरोतिकुसुमशयनीयम् ॥३॥

किंच कुसुमशय्यां तव परिरम्भसुखायालिंगनाय व्रतमिवकरोति कीदृशं कुसुम विशिखस्य कामस्य शरतल्पमास्तरणं यत्र अनल्पविलासकलाभिः बहुतरक्रीडाभिः कमनीयं सुन्दरं व्रतफलपरिपाकेनत्वयावश्यं गन्तव्यमिति ध्वनिः ॥ तल्पन्तुशयनीयं स्यात्तल्पं मदनकलत्रयोरिति विश्वः ॥ नियमो व्रतमस्त्री इत्यमरः दीपकालंकारः ॥३॥

वहतिचचलितविलोचनजलधरमाननकमलमुदारम् ॥
विधुमिवविकटविधुंतुददंतदलनगलितामृतधारम् ॥ ४ ॥

व्रतमुक्त्वेदानीमतिसाहसमाचरतीति कथयतिवहतीत्यादि साउदारं मुखकमलंवह तिधारयति प्रेमाश्रुणासहशीतलेनत्व कीदृशंचलितेत्वन्मार्गावलोकनामप्रसारितेलोचने स्वजलपूरौजलदौमेघौयत्रएतेनधैर्याद्यो मृदुत्वंचसूचितं किमिवविधुंचंद्रमिव कीदृशंचन्द्रं विकटैःकरालैर्विधुंतुदस्यराहोर्दन्तैर्दलनेनखण्डनेनगलिता अच्युतामृतस्यधारायत्र अत्र मुखंविधुनानेत्रजलममृतधारयासहोपमा अत्रविधुंतुदइहकामः क्षीणबलः दैत्यैस्त्वन्मुखं दलतीतिध्वनिः ॥ विकटः सुन्दरेप्रोक्तः विकारालयोरितिविश्वः ॥ तमस्तुराहुः स्वर्भा नुः सैंहिकेयोविधुंतुदइत्यमरः ॥ ४ ॥

विलिखतिरहसिकुरंगमदेनभवंतमसमशरभूतम् ॥
प्रणमतिमकरमधोविनिधायकरेचशरंनवचूतम् ॥ ५ ॥

किंचहेकृष्ण सा राधा रहस्येकांतेकुरंगमदेन कस्तूर्याभवंतंविलिखति एतेनानुराग मालिन्यमुक्तं कीदृशं कामरूपं किंच तवकरेशरं धृत्वाधोमकरमत्स्यं कंदर्पवाहनं विनिधा य प्रणमति नमस्करोति कीदृशं नवचूतं नूतनाम्रांकुरं तव पूजनं कृत्वा तमेव याचते इतिभावः यथा॥ देवतापूजनंकुर्यादथाद्वालिभुजेत्रलिम् । लिखेत्कांतप्रतिकृतिं पाठयेच्छुक सारिकामिति वचनं ॥ अथवा कोपएव प्रणामः श्रीकृष्णएव प्रणामं करोत्वितितं प्रेरयतीतिभावः ॥ मृगनाभिर्मृगमदः कस्तूरीगन्धशेष इति हारावली ॥ ५ ॥

प्रतिपदमिदमपिनिगदतिमाधव तवचरणेपतिताहम् ॥ त्वयिविमुखेमयिसपदि सुधानिधिरपितनुतेतनुदाहम् ॥ ६ ॥

किंच उन्मादावस्थामेवाह प्रतिपदमिति सा प्रतिपदं प्रतिचरणं क्षणं वेदं निगद ति अतिशयेन विलपति हेमाधव मधुप्रिय तवचरणेहं पतितात्वामेव नमस्करोमीत्यन्वयः किंच इति सुधानिधिश्चन्द्रोपित्वयिमुखे पराङ्मुखेसति सपदि शीघ्रं तनुदाहं शरीर तापं तनुते विस्तारयति विरोलंधाकारः ॥ ६ ॥

ध्यानलयेनपुरःपरिकल्प्य भवन्तमतीवदुरापम् ॥ विलपतिहसतिविषीदतिरोदिति चञ्चतिमुञ्चतितापम् ७

किञ्च उन्मादावस्थामुक्त्वा किलकिञ्चितेनाह ध्यानेत्यादिना ध्यानलयेन चिन्तनपरत्वेन भवन्तमतीवदुरापं अतिशयेन दुःप्रापंपुरोग्रेपरिकल्प्यकृत्वा शोकेन विलपति प्रेम्णाहसति स्नेहाधिक्येन विषीदति रोदिति विरहेण चञ्चति गच्छति त्वन्वेषणाय अनुरञ्जनेन तापं दुःखं मुञ्चति त्यजति शोकरोषाश्रुहर्षादेः सङ्करः किलकिंचित मिति दीपकालङ्कारः ॥ ७ ॥

श्रीजयदेवभणितमिदमधिकं यदिमनसानटनीयम्॥ हरिविरहाकुलवल्लवयुवतिसखीवचनंपठनीयम् ॥ ८ ॥

तदर्थग्रहेणाह श्रीजयदेवेति श्रीजयदेवभणितं कथितमिदमधिकमतिशयेन यदियदा मनसाचित्तेन नटनीयं पठितव्यं तदा हरिविरहेण श्रीकृष्णविरहेण व्याकुलाया वल्लव युवतिर्गोपयुवतिः श्रीराधातत्सखीवचनं पठनीयं गीतमेव सर्वविधास्यतीतिभावः ॥८॥

आवासोविपिनायते प्रियसखीमालापि जालायते तापोपिश्वसितेनदावदहनज्वालाकलापायते॥ सापित्व

द्विरहेणहन्त हरिणीरूपायतेहाकथं कन्दर्पोपियमायते विरचयन्शार्दूलविक्रीडितम् ॥ १ ॥

एवं सात्वांविनाकुत्रापि नानन्दंलभत इति प्रलपति आसेति हेकृष्ण त्वद्विरहेणावा सोगृहं विपिनायते अरण्यमिवाचरति किञ्च प्रियसखीमाला वल्लभसहचरीसमूहोपि जालवद्बन्धनत्वेनप्रतीयते तापोविरहोद्भवसन्तापोनिःश्वसितेन श्वासेन दावदहनज्वालावलीवाचरति किञ्च हंतकष्टं त्वद्विरहेण सापिहरिणीरूपायते कामशार्दूलत्रस्ताम्रगीवाचरति परिभ्रमति हाकष्टं कथं वा कन्दर्पोपि कामोपियमायते त्वद्विरहेणकृतान्तवदाचरति एतेन कामस्य सन्तापकर्तृत्वमुक्तं किंकुर्वन् शार्दूलस्य व्याघ्रस्य विक्रीडितं क्रीडांविरचयन् कुर्वन् मृगीमरणं व्याघ्रादेवभवति तद्वदत्रापि एतेनोद्वेगावस्थाव्याध्याव स्थाचोक्तातल्लक्षणम् ॥ अभीष्टसंगमाभावा व्याधिःसन्तापलक्षणः । शार्दूलोव्याघ्रे पशुभेदेवेतिविश्वः ॥ १ ॥

## देशाखरागेएकतालीताले ॥

स्तनविनिहितमपिहारमुदारम् ॥ सामनुतेकृशतनुरिवभारम् ॥ १ ॥ राधिकाविरहेतवकेशव ॥ ध्रुपदं ॥

तदेवगीतेनाह देशाखरागे एकतालीताले रागलक्षणम् ॥ आस्फोटनाविःकृतरोमहर्षो नियुद्धसंबद्धविशालबाहुः । प्रांशुःप्रचंडद्युतिरिंदुगौरोदेशाखरागः किलमल्लमूर्तिरिति॥ताललक्षणमुक्तमेव ध्रुपदं हे केशव साराधिका तव विरहे सति कृशतनुरितिहेतोः स्तनविनिहितं स्तनधृतमपि उदारं मनोहरं सुंदरमपि त्वयादत्तमपिहारं भारं मनुते तद्धरणासमर्था त्वयाकर्तव्येतिभावः ॥ १ ॥

सरसमसृणमपिमलयजपंकम् ॥ पश्यतिविषमिववपुषिसशंकम् ॥ २ ॥

विरहजनितव्याधिमाह साचंदनलेपं सरसमसृणं आर्द्रचिक्कणमपि कर्पूरादिसहितं वा सुदेहे सशंकं शंकासहितं विषमिव गरलमिव पश्यति एतेन जीवितायामतिसाहसं करोतीति ध्वनिः ॥ मसृणोकर्कशेस्निग्ध इतिमेदिनीकारः ॥ पंकः कर्दमपापयोरिति विश्वः ॥ २ ॥

श्वसितपवनमनुपमपरिणाहम् ॥ मदनदहनमिववहतिसदाहम् ॥ ३ ॥

किंच सा त्वद्विरहे श्वासितपवनं श्वासवायुं मदनदहनमिव कामाग्निमिव वहति धारयति विरहवायोरतिदाहकत्वात् कीदृशं अनुपमपरिणाहं उपमारहितः परिणाहो दैर्घ्यं यत्र कीदृशं सदाहं दाहसहितं पदद्वये तदाहः स्वाधिक्यंच सूचितम् ॥ ३ ॥

दिशिदिशिकिरतिसजलकणजालम् ॥ नयननलिन मिवविगलितनालम् ॥ ४ ॥

हे कृष्ण सा नयननलिनं नेत्रपद्मं जलेन दिशि त्वदागमनकांक्षया किरति क्षिपति कीदृशं अश्रुसमूहैः सहितं कीदृशं विगलितनालमिव गलितदण्डमिव नायकाद्भयादश्रु संशोषणाभावः सूचित इति किंच भवदागमनेच्छाया नयनपद्मादिग्मंडनं करोतीतिभा वः विरोधालंकारः उद्वेगावस्थेयं ॥ ४ ॥

नयनविषयमपिकिशलयतल्पम् ॥ कलयतिविहित हुताशविकल्पम् ॥ ५ ॥

किंच सा नयनविषयं नेत्रगोचरमपि किशलयतल्पं पल्लवशय्यां विहितहुताशवि कल्पं कृताग्निसंदेहं कलयति स्वयं न जानातीत्यर्थः एतेन इष्टमनिष्टंच सद्दूषणपि शरीरे त्वद्विरहे सा सुखमिदं न जानातीति ध्वनिः उद्वेगावस्थाविरोधालंकारश्च ॥ ५ ॥

त्यजतिनपाणितलेनकपोलम् ॥ बालशशिनमिवसा यमलोलम् ॥ ६ ॥

किंच सा सायं सन्ध्यासमये करतलेन कपोलं गण्डस्थलं त्यजति कीदृशं अलोलं निश्चलं दिवसस्तु महताकष्टेननीतः रात्रिः युगशतोपमा कथंनेतव्येति भावः कमिव प्रतिपच्चन्द्रमिव अर्द्धकरतलाच्छादने मुखस्य बालचन्द्रसाम्यं सूचितं सायमित्युभयत्र जडतावस्थेयं ॥ यत्र ध्यायति निःसंगं जडताया प्रकीर्तितेति ॥ ६ ॥

हरिरितिहरिरितिजपतिसकामम् । विरहविहितमर णेवनिकामम् ॥ ७ ॥

किंचसानिकाममतिशयेन सकामंसाशयं हरिरितिवारं २ जपत्यावर्तयति नतुत्वां हरिंमत्वास्मरतिकिंतुत्वां नन्दसूनुमेव जानातिकेव विरहेवस्तेनगुणकीर्तनावस्थोक्ता ७॥

श्रीजयदेवभणितमितिगीतम् । सुखयतुकेशवपदमु पनीतम् ॥ ८ ॥

गीतार्थसंग्रहेआह श्रीजयदेवेत्यादि इत्यनेनप्रकारेण श्रीजयदेवेनभणितमुक्तं श्रीरा धामश्रीगीतं श्रीमाधवकेशवपदयोगिनुभवतु श्रीमत्केशवपदवैकुंठं श्रीवृन्दावनं वा प्र त्युपलक्षितमुपलब्धिमानेवा केशवन्यपदं यस्यावासस्थानं निकुंजगृहंवा ॥ पदं स्थानेप वाक्येपिसंनिधिव्यवसायर्योरितिविश्वः ॥ ८ ॥

**सारोमांचतिसीत्करोति विलपत्युत्कंपते ताम्यति ध्यायत्युद्भ्रमतिप्रमीलतिपतत्युद्यातिमूर्च्छत्यपि ॥ एताव त्यतनुज्वरेवरतनुर्जीवेन्नकिंतेरसात् स्वर्वैद्यप्रतिमप्रसी दसियदित्यक्तोन्यथाहस्तकः ॥ १ ॥**

इदानींत्वद्विरहव्याधिसंतप्तायुतं मरिष्यतीतिसूचयन्नाहसेति साराधारोमांचितदे हाभवति सीत्करोतिसीत्कारं करोति विलपति विलापंकरोति उत्कंपतेसकंपता भवति ताम्यतिग्लानियुक्ताभवति ध्यायतिध्यानंकरोति उद्भ्रमतिभ्रांतिंनकरोतिप्रमीलतिनेत्रप्र मीलनंकृत्वामुखमनुभवति पतति शय्यायांगच्छति उद्यातिअभ्युद्गमनंकरोति मूर्च्छति मूर्च्छां प्राप्नोति एतैःक्रियापदैरभिलापदुःखगुणकीर्तनवियोगग्लानिमुखभ्रांतिसमागमा भ्युद्गमनउद्वेगमूर्छाक्रमेणोक्ताः हेस्वर्वैद्यप्रातिमअश्विनकुमारतुल्य एतावत्येतावत्मा त्रे अतनुज्वरेयदित्वंवरतनुः सुकुमारांगः प्रसीदसि प्रसन्नोभवसि तर्हितेतवरसात् शृंगा ररसात् औषधत्वाद्वाकिंनजीवेत् अपितुजीवेदेव अन्यथाप्रकारांतरेण तस्याहस्तकः वैद्यानांकृपाविशेषः त्यक्तः नजीवेदेव यथात्यक्तकृपाविशेषे वैरोगिणोंतकस्तथाऽस्यास्त्व मित्यर्थः हस्तकः कृत्यनृत्ययोरितिवैजयंती हेतुरलङ्कारः ॥ १ ॥

**स्मरातुरांदैवतवैद्यहृद्यत्वदंगसंगामृतमात्रसाध्याम्॥ विमुक्तबाधांकुरुषेनराधामुपेन्द्रवज्रादपिदारुणोसि॥ २ ॥**

अतिशिथिलप्रलंभमनुभवंती स्मरेत्याह हेदैवतवैद्यदेववैद्यहृद्यमनोहरत्वं स्मरातुरांका मसंतप्तां राधांविमुक्तबाधां त्यक्तपीडांनकुरुषे न करोति यत्तत्तदोपेंद्रवज्रादपिकठिनोसि यथेंद्रोवज्रेण वृत्रंहतवांस्तथा त्वंवज्रभार्यामसि ध्वनिः ननु औषधाद्वा धनदानादपि प्र बाधानांप्रतीकारः कर्तव्यः किमर्थेत्याह हृद्यंसुंदरं त्वदंगसंगएवामृतं जीवनोपायस्तेन साध्यांप्रतिकार्यां हृद्यमुभयत्र हृद्यंमनोहरंप्रोक्तं हृद्यच हृदयप्रियमिति ॥ २ ॥

**कंदर्पज्वरसंज्वरातुरतनोराश्चर्यमस्याश्चिरंचेतश्चंद नचन्द्रमःकमलिनीचिन्तासुसन्ताम्यति ॥ किन्तुक्लान्ति**

रसेनशीतलतनुंत्वामेवमेकंप्रियंध्यायन्तीरहसिस्थिताक्षणमपिक्षीणाक्षणंप्राणिति ॥ ३ ॥

नन्वन्यैः शीतलोपचारैः कामशांतिः कर्तव्या किंमदनुग्रहेणतत्राह वैपरीत्यंकंदर्पेति आश्चर्यमहोस्याश्चेतश्चित्तं चिरंचिरकालंचंदनादीनां चितानुस्मरणेप्वपि किंतुन देहेषु संताम्यति ग्लानितापंवाप्राप्नोति तद्विरहे अदाहकंदाहकेन प्रतीयतइतिभाव न न्वीदृशीसाकथंजीवतीत्याह हेक्रांतिरससंतप्तावलोकनरसइन हेविष्णो किंतु त्वामेवैकंप्रियंवल्लभं ध्यायति क्षणक्षणमात्रं प्राणिति जीवति कीदृशी रहस्येकांतेक्षणमपिस्थिता कीदृशी क्षीणाकृशांगी कीदृशं त्वां शीतलातनुर्यस्यतं क्वांतिवशेनेति क्वचित्पाठः इनः सूर्ये प्रभाविति विश्वः संतापः संकर इत्यमरः विरोधभमालङ्कारः ॥ ३ ॥

क्षणमपिविरहःपुरानसेहेनयननिमीलनखिन्नयाययाते ॥ श्वसितिकथमसौरसालशाखां चिरविरहेणविलोक्यपुष्पिताग्राम् ॥ ४ ॥

नन्वेतावत्कालं जीवितायेपिनमरिष्यति किंमदनुग्रहेणेति तत्राह क्षणमिति यथा श्रीराधायापुरासंगदशायांरहः एकांते ते तवविरहः क्षणमपिनसेहे न सोढा कीदृश्या नेत्रनिमेषेण खिन्नया प्राप्तदुःखया असावेवंभूता श्रीराधारसालशाखां आम्रशाखां पुष्पिताग्रां पुष्पितशिखरां विलोक्यचिरंविरहेण चिरकालवियोगे न कथंकेनप्रकारेण श्वसितिजीवतिश्वासमात्रेणजीवनं नत्ववयवादिप्रचलनमितिभावः पुष्पिताग्रामिति वसंतागमेन हृत्कामोदयोत्पन्न इतिध्वनिः श्वसितीतिपरमसाहसाचरणमिति सूचितम् विरोधालंकारः ॥ ४ ॥

वृष्टिव्याकुलगोकुलवनरसादुद्धृत्यगोवर्द्धनंबिभ्रद्वल्लवसुंदरीभिरधिकानंदाच्चिरंचुम्बितः ॥ कंदर्पेणतदर्पिताधरतटीसिंदूरचिह्नांकितोबाहुर्गोपतनोस्तनोतुभवतांश्रेयांसिकंसद्विषः ॥ ५ ॥

## इतिश्रीगीतगोविन्देचतुर्थःसर्गः ॥ ४ ॥

संप्रतिश्रीराधावलंबनायभक्तावलंबनाय वा कविवाक्येन सखी श्रीकृष्णबाहुंस्तौति वृष्टीति गोपतनोः श्रीकृष्णस्यबाहुः भवतः श्रीराधालक्षणस्य शुश्रूषोः सखीस्ते श्रेयांसि

विरहव्याधिनाशकानि कल्याणानि तनोतु विस्तारयतु कीदृशः कंसद्विपः दैत्यवैरिणः सखीपक्षे श्रीराधाविरहेण सुखवैरिण इति वा बाहुपदं श्रीराधालिंगनार्थमितिभावः कीदृशः तृष्णयाव्याकुलस्य दुःखितस्य गोकुलस्य गोसमूहस्यावनं पालनं स एवं रसोरागो वीर्यं वा तस्मात् गोवर्द्धनपर्वतमुद्धृत्य समाहं बिभ्रत्दधात् कीदृशो बाहुः वल्लववल्लभाभिर्गोपसुंदरीभिरधिकानंदादतिहर्षादधरः रासरसादौ गोवर्द्धनोद्धरणसमये वा चुम्बितः पुन. कीदृशः दर्पेण कंदर्पगर्वेणैवंताभिरर्पिता दत्ता अधरत एवं सिंदूरस्य मुद्राः सिन्दूरचिह्नानितैरंकितः अधरलोहितत्वात्संभोगचिह्नं कितइत्यर्थः तया श्रीराधयानुरागेन चिह्नितइति वा सखीपक्षे ॥ श्रीकृष्णंपरमानंदंमाधवंभक्तवल्लभम् । श्रीराधासखिवाक्येन प्रेम्णाचपरिपूरितम् ॥ ५ ॥

इतिश्रीमत्कृष्णचंद्रसेवकोदीच्यावतंसशिवदासात्मजवनमालिभट्टविरचिता यांश्रीवनमालिसंजीविन्यांगीतगोविंदटीकायांस्निग्धमधुसूदनोनाम चतुर्थःसर्गः ॥ ४ ॥

## अहमिहनिवसामियाहि राधामनुनयमद्वचनेनचानयेथाः ॥ इतिमधुरिपुणासखीनियुक्तास्वयमिदमेत्यपुनर्जगादराधाम् ॥ १ ॥

पञ्चमेप्रेमजनितं तद्विश्लेषविचेष्टितम् । निशम्यप्रेषयामास तत्सखींचतदन्तिकम् ॥ सम्प्रति श्रीकृष्णनियुक्ता सखीराधामाह अहमितिइत्येवं मधुरिपुणा श्रीकृष्णेननियुक्ता प्रेरितासखी पुनः श्रीराधास्वयमेत्यगत्वा इदंवक्ष्यमाणंजगादोवाच इति किं हे सखि त्वं याहिगच्छ इहकुञ्जे दुःखश्रवणाद्गन्तुमशक्तोऽहंनिवसामि तत्प्रतीक्षांकरिष्यामि ननुसारवती स्वयमेवगत्वाप्रार्थितां कृतापराधेनमयासमक्षंवक्तुंनशक्यते अतएव त्वं मद्वचनेनानुनयशान्तयमत्समीपञ्चानयेथाः आनयस्वविभावनालङ्कारः ॥ १ ॥

## वराडीरागेरूपकताले ॥

## वहतिमलयसमीरेमदनमुपनिधाय ॥ स्फुटतिकुसुमनिकरेविरहिहृदयदलनाय ॥१॥ तवविरहेवनमालीसखिसीदति ॥ ध्रुपदम् ॥

ध्रुपदम् वराडीरागेरूपकताले ॥ अत्राभिसारिकेयं तस्याः लक्षणम् ॥ लज्जांहित्वासमाकृष्ययौवनेनमदेनवा । अभिसारयतेकांतंसाकीर्तिताभिसारिकेति ॥ रागलक्ष-

णम् ॥ विनोदयन्तीदयितंसुकेशी सुकङ्कणाचामरचालनेन । कर्णेदधानासुरपुष्पगुच्छं वराङ्गणेयंकथितावराङ्गीति तालखण्डं ॥ प्रागेवोक्तं श्रीकृष्णस्य विरहोद्रेकमाहवहती त्यादि हेसखिराधे तवविरहेवियोगे वनमालीसीदति दुःखितो भवति वनस्य जलस्यमा लास्तीति अनेनत्वां विनोद्वेगावस्थेति ध्वनिः कस्मिन्सति मदनं कामं उपनिधाय स-मीपवर्तिनंकृत्वा मलयसमीरे मलयानिलेवहतिसति किञ्च विरहिणांवियोगिनां हृदयद लनाय मर्मपीड़नाय कुसुमनिकरे पुष्पसमूहे स्फुटति विकसतिसति त्वयाधरामृतेनस-जीवनीय इति ममप्रार्थना विशेषोक्तिरलङ्कारः ॥ १ ॥

**दहतिशिशिरमयूखे मरणमनुकरोति ॥ पततिमदन विशिखेविलपतिविकलतरोति ॥ २ ॥**

नन्दकिशोरस्यावस्थान्तरसखीराधांप्रत्याह दहतीत्यादि हेराधे श्रीकृष्णः शिशिरम यूखेचन्द्रेदहतिसति मरणमनुकरोति मरणवद्दुःखमनुभवति अनुमरण मतितुच्छीकरो ति इतिवा किञ्च मदनविशिखे कामबाणेपततिसति अतिशयेन विकलतरोव्याकुलोपि विलपति विलापंकरोति तद्विरहेकामोपितस्य बाणैःप्रहरतीतिध्वनिः ॥ २ ॥

**ध्वनतिमधुपसमूहेश्रवणमपिदधाति ॥ मनसिवलित विरहेनिशिनिशिरुजमुपयाति ॥ ३ ॥**

मधुपसमूहे भ्रमरनिकरे ध्वनति गुंजति सति श्रवणमपिदधाति हस्ताभ्यां कर्णा वाच्छादयति एतेन श्रवणायातिधैर्यं करोति किंच वलितविरहे संदीप्तवियोगाग्नौ नि शि २ रात्रौ २ मनसिहृदयेरुजं तत्कृतां पीड़ामुपयाति प्राप्नोति दिवसस्तुत्वन्मार्गावलो कनेन कथंचिन्नीतो रात्रिर्नैव गच्छतीति दीर्घपीड़ाध्वनिता ॥ ३ ॥

**वसतिविपिनवितानेत्यजतिललितमपिधाम ॥ लुठतिधरणिशयनेबहुविलपतितवनाम ॥ ४ ॥**

किंच विपिनविताने वनविस्तारे समूहे वा वसति तिष्ठति ललितं सुन्दरं धामगृहं त्यजति नैतादृशस्यत्वामन्तरासुखलेशइतिभावः धामशब्दवाच्यान्सर्वान् त्यजतीति ध्वनिः किंच शय्यादिकं विहाय धरणिशयने भूमितल्पे लुठति त्वच्चरणालंकृतभूमौ सर्वांगैश्चेष्ट इतिभावः धामदेहे गृहे वक्षेचेति विश्वः ॥ ४ ॥

**भणतिकविजयदेवइतिविरहविलसितेन ॥ मनसिर भसविभवेहरिरुदयतुसुकृतेन ॥ ५ ॥**

कविजयदेवेति विराहिणां वियोगिनां विलसितेन विलासेनैवं भणति सति हार श्रोतॄणां मनस्सुदयतु हृदयं प्राप्नोतु कीदृशे मनसि सुकृतेन पुण्यनिचयेन सुष्टुकृतेन गीतेन वा रभसस्य हर्षस्य विभवे पूरे उत्साहवेगयोः प्रोक्तोरभस इति हलायुधः स्व भावोक्तिरलंकारः ॥ ५ ॥

पूर्वंयत्रसमंत्वयारतिपतेरासादिताःसिद्धयस्तस्मिन्ने वनिकुंजमन्मथमहातीर्थेपुनर्माधवः ॥ ध्यायंस्त्वामनि शंजपन्नपितवैवालापमंत्रावलीं भूयस्त्वत्कुचकुम्भनि र्भरपरीरम्भामृतंवांछति ॥ १ ॥

किंच त्वत्प्रश्रये तस्योत्कंठामाह पूर्वमिति हेसखिराधेमाधवः श्रीहरिस्तस्मिन्नेवनि कुंजमन्मथमहातीर्थे निकुंजवरकामतीर्थे भूयो वारंवारं त्वत्कुचकुम्भयोः परिरंभोगाढा लिंगनामृतं वांछति कुंभपदं रतिजलधितरणायेति भावः किंकुर्वन् पुनस्त्वामेव नान्यं इह तीर्थेध्यायन् अनिशं निरन्तरं तव आलापाएवमंत्राः परमसिद्धिप्रदाः मंत्रास्तेषामा वलीं परम्परां यन्नावर्तयन् त्वामिष्टं देवत्वेनावर्तयन्निति स्नेहातिशयः सूचितः तीर्थप्र भावमाह यत्र निकुंजसिद्धतीर्थे पूर्वं प्रथमं सार्द्धं रतिपतेः कामस्य सिद्धयः कामसुखानि त्वया आसादिताः प्राप्ताः एतेनात्रा भंगोकामः अदृष्ट प्रयत्नेन सेव्यत इति ध्वनिः स्व भावोक्तिरलंकारः ॥ १ ॥

गुर्जरीरागेएकतालिताले ॥

रतिसुखसारेगतमभिसारेमदनमनोहरवेशम् ॥ नकुरु नितंबिनिगमनविलंबनमनुसरतंहृदयेशम् ॥ १ ॥ धीरस मीरेयमुनातीरेवसतिवनेवनमाली ॥ गोपीपीनपयोधर मर्दनचंचलकरयुगशाली ॥ ध्रुपदं ॥

एवंस्वानुरागश्रवणप्रसन्नतां श्रीकृष्णंप्रति सखीप्रेरयति सुखेत्यादिना गीतस्यगुर्ज रीरागः रूपकतालश्चोभयोर्लक्षणं पूर्वमेवोक्तंध्रुवस्यापि हेनितंबिनिपृथुनितंबयुक्तेतस्य उत्कर्षप्रदर्शनाय नितंबवतीतिध्वनिः हृदयेशंहृदयानुवर्तिनंत श्रीकृष्णंअनुसरअनुग च्छगमनाय अतिसाराय विलंबनंनकुरु माकुरु यावद्वनमालीयमुनातीरेवनेतिष्ठतितावदे वानुसर कीदृशेरतिसुखसारे रतिसुखंसुरतसुखमेवसारोयत्र त्वदागमनकांक्षयाभिसारे

तिष्ठंतं कीदृशं मदनमनोहरवेशं कामस्यमनोहरोवेषः शरीराकारोयत्र कीदृशेधीरोमंद स मीरोवायुर्यत्रत्वद्विरहनाविरणाय धृत्वा वनमालेतिध्वनिः यमुनातीरेणच धीरसमीराभ्यां शैत्यमंदसौगंध्यनुक्तानिधीरः युद्धगतेधीर इति यादवः प्रेंखोनामालंकारः कीदृशो वन माली गोपीनां पीनपयोधराणां वर्तुलस्तनानां मर्दनेन चंचलंचपलं यत्करयुगलं हस्तयु गलं तेनशाली शोभमानः वशीकृतयुवतिसमूहोवा ॥ १ ॥

**नामसमेतंकृतसंकेतंवादयतेमृदुवेणुम् । बहुमनुतेतनु तेतनुसंगतपवनचलितमपिरेणुम् ॥ २ ॥**

मृदुवेणुं मृदुशब्दयुक्तं वेणुंवादयते कीदृशं नामसमेतं हे राधे हे वल्लभे हे प्राणेश्वरि इति यत्त्वन्नामतद्युतं वाद्यमानाद्वेणोस्त्वन्नामैवाभवतीतिभावः रामकरी असावरी धना श्री इति नामरागत्रयंतद्युतं कीदृशं नाम संकेतो यत्र तादृशं यदाहंत्वन्नामसमेतो वेणु वाद्यतेमया तदैवत्वयागंतव्यमिति सूचितं किंच हे तनु अंबार्थनद्योर्ह्रस्वः ते तवतनुसंग तपवनचलितमपिरेणुं बहुमनुतेअत्यादरेणधत्ते बहुश्लाघ्यमात्मानं मनुतेमन्यते वा यदा वायुनाप्राप्तं रेणुमपिधृत्वा मन्येहमिति मन्यमानस्तदात्वदंगसंगमे नानंदोभवितेतिकिं वक्तव्यमितिभावः ॥ २ ॥

**पततिपतत्रेविचलतिपत्रेशंकितभवदुपयानम् ॥ रच यतिशयनंसचकितनयनंपश्यतितवपंथानम् ॥ ३ ॥**

किंच सर्वकरणवृत्तिरपित्वय्यर्पितातामेवाह पततीतिपतत्रे पक्षिणिपतति वृक्षा द्वृक्षांतरंगच्छतिसति किंच वृक्षात्पत्रे विचलति सकंपमानेसति सश्रीकृष्णः शयनं श य्यां रचयति त्वत्सुरतसंभोगार्थं निर्मातीत्यर्थः तव पंथानं मार्गंच चकितनयनं कदा गमिष्यतीति सभयनेत्रं यथास्यात्तथादिशः प्रतिपश्यति कीदृशं पंथानं शंकितभवदुप यानं शंकितंभवत्या उपयानं समीपागमनं यत्र तादृशं सर्वनाम्न इति पुंवद्भाव इति प्रेंख शर्भितोभ्रमालंकारः ॥ ३ ॥

**मुखरमधीरंत्यजमंजीरंरिपुमिवकेलिसुलोलम् ॥ च लसखिकुंजंसतिमिरपुंजंशीलयनीलनिचोलम् ॥ ४ ॥**

सप्रसंगामालक्ष्याह मुखरेत्यादि हे सखिराधे मंजीरंनूपुरंत्यज कीदृशंमुखरं श ब्दयुक्तं अधीरंचगमनसूचकमित्यर्थः कीदृशं केलिषुसुरतक्रीडासुलोलंचंचलं कमिव रिपुमिव किंच कुंजंकुंजमंदिरं चलगच्छ कीदृशं सतिमिरपुंजं अंधकारसमूहयुक्तं सद्यो भामालक्ष्य गमनायोपायमाह नीलनिचोलं नीलवस्त्रं शीलयपरिधेहि एवं मदुक्तिशिक्षित

कौशलेन सखी राधामशिक्षयदितिभावः मंजीरोनूपुरोऽङ्घ्रियामित्यमरः निचोलः प्रच्छदपट इत्यपि ॥ ४ ॥

उरसिमुरारेरुपहितहारेघनइवतरलबलाके ॥ तडिदिवपीतेरतिविपरीतेराजसिसुकृतविपाके ॥ ५ ॥

नन्वलंकारत्यागेन शोभानस्यादित्यलौकिकीं शोभासंपत्तिमाहउरसीत्यादि हे पीते दाहोत्तीर्णकनकगौरांगि हे सुकृतविपाके पूर्वजन्मार्जितपुण्यफले मुरारेः श्रीकृष्णस्योरसिवक्षसि राजिष्यसिवर्त्तमानसमीपे इतिवत् कदारतिविपरीते पुरुषायितनायिकारतिकाले सुरतांते वा कीदृशे उरसि उपहितहारे समर्पितमुक्ताहारे आलिंगनायाप्रसारितहारे वा पुनः कीदृशे उरसि घनेइव मेघसदृशे कीदृशे घनेतरलाश्चंचला बलाकावकपंक्तयो यत्र केवतडिदिव यथा नानावर्णविचित्रमलंकारवती तड़ितघनस्योपर्यधः स्फुरंतीराजते तथा त्वमपीतिध्वनिः तत्र हारोरतिराधानां बलाकामेघतड़िता मानुक्रमेण साम्यं ॥ बलाकावकपंक्तौस्याद्बलाकाविसकंठिका इतिविश्वः ॥ विपाकःकीर्त्यंते स्वादौपरिणामेवदुर्जताविति विश्वः ॥ पीतोगौरो हरिद्राभ इत्यमरः ॥ ५ ॥

विगलितवसनंपरिहृतरशनंघटयजघनमपिधानम् ॥ किशलयशयनेपङ्कजनयनेनिधिमिवहर्षनिदानम् ॥ ६ ॥

नायकोपितां रतोत्कण्ठांकारयित्वा पुनस्तस्याउत्कण्ठांजनयितुमाह विगलितेत्यादि हेपङ्कजनयने कमलाक्षि किशलयशयने नवपल्लवतल्पेजघनंघटय आरोपय कीदृशं त्रिशेषरसावेशेनगलितंस्खलितं वसनंनीलवस्त्रं यत्र पुनः कीदृशं परिहृता दूरीकृता रशनाक्षुद्रघण्टिका यत्र नीलाम्बुदसुन्दर श्रीनन्दकिशोरदर्शनेन स्खलितवसनरशनमितिध्वनिः अतएवापिधानं आवरणशून्यं किञ्च हर्षनिदानं परमानन्दस्थानं कामिवनिधिमिवनाकस्याभीष्टं निधिमिव यथा निधिरुद्घाटितोसुखाय भवति तद्वत् जघनङ्कटेरधोभागइति हारावली निधानंनिधिगेहयोरितिहैमे ॥ ६ ॥

हरिरभिमानीरजनिरिदानीमियमपियातिविरामम् ॥ कुरुममवचनंसत्वररचनंपूरयमधुरिपुकामम् ॥ ७ ॥

एवं शिथिलप्रपन्नांराधांप्रतिरजनीभेदमुपादायाह हरिरितीत्यादिन्या हरिःकामतापहारोभितः सर्वतः सर्वभावेनवाचामेव मानयति नान्यामित्यभिमानीयतस्त्वयोवातिशयेन प्रेमाभिमानवानतः मधुर्वसन्तोरिपुरत्तोभक्तत्वेन यस्यतस्यमधुरिपोः कामं कामाभिलापपरय पू

कि

अत्र सम्प्रतीयं रजनी रात्रिर्विराममवसानंयातियास्यति अपि यातियाति तावन्ममवचनं सत्वररचनं त्वराशीघ्रगमनसहितंकुरु रतिमार्नाति क्वचित्पाठस्तदा श्रीराधारतिप्रखं अत्राभिसारिकानायिका तल्लक्षणम् ॥ मदनानलसन्तप्ता याभिसारयतिप्रियमिति ॥ एवंसुरतसमये समुपस्थिते गमनविलम्बनमयुक्तमितिभावः रसवदलङ्कारः ॥ ७ ॥

श्रीजयदेवेकृतहरिसेवेभणतिपरमरमणीयम् ॥ प्रमुदितहृदयंहरिमतिसदयंनमतसुकृतकमनीयम् ॥ ८ ॥

गीतार्थसंग्रहंमङ्गलत्वेन योजयति श्रीत्यादि हेहरिभक्ताः श्रीजयदेवे परमरमणीयं निरुपममनोहरंभणति कथयतिसति हरिंनमतनमस्कुरुत कीदृशे कृताहरिसेवाचिन्तना-दिरूपायेन कीदृशं हरिं प्रमुदितंप्रकर्षेणानन्दितं हृदयंयस्यतं पुनः अतिशयेन भक्तेषुदया युक्तं पुनः कीदृशं सुकृतैः पुण्यराशिभिः सुकविभिर्वा प्रार्थनीयं सुन्दरंवाप्रस्तुतोक्तिर लङ्कारः ॥ ८ ॥

विकिरतिमुहुःश्वासानाशाःपुरोमुहुरीक्षतेप्रविशतिमुहुःकुंजंगुंजन्मुहुर्बहुताम्यति ॥ रचयतिमुहुःशय्यांपर्याकुलंमुहुरीक्षतेमदनकदनक्लांतःकांतेप्रियस्तववर्तते ॥ १ ॥

एवंनानोपायैरनभिसरंती श्रीराधां पुनः सख्याह विकिरतीत्यादिना हेकांते स्वप्रदीप्त्यावशीकृतवल्लभे तव प्रियोवल्लभः श्रीकृष्णोमदनस्य कामस्य त्वद्विरहेण कदनंपीडनं तेनक्लांतः संतप्तोवर्तते संतप्तमेवाह मुहुर्वारंवारं तदागमनचिंतयश्वासान् संतापनिःश्वासान्विकिरतिविक्षिपति मुहुः पुरोग्रेआशादिशईक्षतेपश्यति केनापिमार्गेण कुंजंगतागमिष्यति मुहुः कुंजंलतामंदिरंप्रविशति कीदृशं कुंजंकुंजतोभ्रमरायन्नतत् गुंजन् तत्रायलभमानोमुहुस्ताम्यति ग्लानिसंतप्तोभवति इत्येवं स्थितोपि त्वदालिंगनाय शय्यांविविधकिशलयपुष्पतल्पंरचयति तदल्पंकृत्वा नागतेयमिति विज्ञायत्वदागमनाय मुहुःपरित आकुलं व्याकुलमीक्षते एतेन त्वयारागातिशयः प्रोक्तः दीपकालङ्कारः ॥ १ ॥

त्वद्वाक्येनसमंसमग्रमधुनातिग्मांशुरस्तंगतोगोविन्दस्यमनोरथेनचसमंप्राप्तंतमःसांद्रताम् ॥ कोकानांकरुणस्वनेनसदृशीदीर्घामदभ्यर्थना तन्मुग्धेविफलंविलंबनमसौरम्योभिसारक्षणः ॥ २ ॥

स्वकार्यविदिनिअधुना संप्रतित्वद्वाक्येन समंसार्द्धंतिग्मांशुः सूर्यःसामस्त्येन अस्तं गतोदर्शनं प्राप्तः अथवा सगग्रमधुनाखिलमधुसमूहेनेति वाक्येन किंच गोविन्दस्य श्री कृष्णस्य मनोरथेन श्रीराधागमिष्यतीति वांछयासमंसार्द्धंतमअन्धकारः सांद्रतांस्निग्ध तांप्राप्तं निविड़ंसकाराभिसरणं योग्यमित्यर्थः एपादीर्घामदस्यर्थना शीघ्रंगम्यतामिति मदीयाप्रार्थना कीदृशी कोकानां चक्रवाकानां करुणस्वनेन करुणरसाश्रयविरहकूजिते न सदृशी यथा चक्रवाकानां करुणस्वनोनानाप्रकारः श्रूयते तथा मदीयाः युक्तयस्तत्राधे भवतीत्यवैदग्ध्यमितिभावः तत्रतोविलम्बनंगमनायविफलं हस्तगतसौख्यप्रतिबंधकमि त्यर्थः अतोत्राभिरक्षण अभिसरणसमयोरम्योगमनायमनोहरः सहोक्तिरलङ्कारः यथा सहदीर्घाभमरश्वासैरिमाः संत्यतित्रयइतिदण्डाः ॥ २ ॥

**आश्लेषादनुचुम्बनादनुनखोल्लेखादनुस्वांतजात्प्रो द्बोधादनुसंभ्रमादनुरतारंभादनुप्रीतयोः ॥ अन्यार्थंग तयोर्भ्रमान्मिलितयोःसंभाषणैर्जानतोर्दम्पत्योर्निशि को नकोनतमसिव्रीड़ाविमिश्रोरसः ॥ ३ ॥**

अतिसाररम्यतां प्रथयति अपितुसर्वोपिरसोभवत्येव कीदृशयोः सुरतमुद्दिश्यार्थ व्याजेन सुरतंप्रतिगतयोः कीदृशयोः भ्रमात् भ्रमतः परिभ्रमणतो वा सांद्रेतमसिमिलित योः संगतयोः परस्परालापैः स्वरभंगाद्यालापैर्वासुरताभिप्रायजानतोः कीदृशयोः आलि गन चुम्बननखक्षतकामोद्बोधकामोद्रेकसुरतारंभौ क्रमादेतैरनु पश्चात्प्रीतयोर्लब्धानं दयोस्तृप्तयोरित्यर्थः आश्लेषादिक्रमंविनैव प्रीतयोरितिवा ॥ ३ ॥

**सभयचकितंविन्यस्यंतींदृशांतिमिरेपथिप्रतितरुमुहुः स्थित्वामन्दंपदानिवितन्वतीम् ॥ कथमपिरहःप्राप्तामंगै रनंगतरंगिभिः सुमुखिसुभगःपश्यन् सत्वामुपैतुकृता र्थताम् ॥ ४ ॥**

पुनरपि तांत्वरयितुं कृष्णोत्कंठामाह सभयेति हेसुमुखि सुन्दरि सुभगः सुन्दरा वयिः श्रीकृष्णस्त्वां पश्यन्कृतार्थतां जन्मसफलत्वं समुपैतु प्राप्नोतु कीदृशींत्वां तिमि रेंधकारसहिते पथिमार्गे सभयचकितं भयसहितं चकितं यथातथा शृंगाररससंभ्रमेण दृशौनेत्रे विन्यस्यंतीं क्षिपन्तीं अनेन दृशोरलौकिकसौंदर्यमुक्तं कीदृशीं मुहुर्वारं २ प्रति तरुं प्रतिवृक्षंस्थित्वा छलव्याजेन प्रियागमनं समीक्षमाणा पदानि मन्दंशनैः वितन्वतीं

पुनः कीदृशीं कामतरंगैः कथं अपि महताकष्टेन अंगैः रहः एकान्तभूईं प्राप्तां मुमुत्सी त्यन्धकारे प्रकाशनहुलत्वमुक्तं रसवदलंकारः ॥ ४ ॥

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीने पथ्योचितनीलरत्नमवनीभारावतारान्तकः ॥ स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषप्रदोपश्चिरं कंसध्वंसनधूमकेतुरवतुत्वांदेवकीनन्दनः ॥ ५ ॥

इतिश्रीगीतगोविंदेसाकांक्षपुंडरीकाक्षोनामपंचमसर्गः५

इदानींकविराशिषमाशास्तेराधेति देवकीनन्दनश्चिरं चिरकालंत्वामवतु रक्षतुदेव कीति यशोदानामतद्यथा ॥ द्वेनाम्नीनन्दभार्यायायशोदादेवकीतथेति पद्मपुराणे ॥ कीदृशःराधामुग्धमुखारविंदस्य मधुपस्तदधरामृतपानकर्ता पुनःकीदृशः त्रैलोक्यस्य मौलिस्थलीमुकुटस्थानं वृन्दावनंतस्यनेपथ्योचितमलङ्कारयोग्यं नीलरत्नइंद्रनीलमिवश्यामरूपं अथवा त्रैलोक्यमौलिस्थली श्रीराधातदलङ्करणमिति कीदृशःभूभारावतारांतकःअसमर्थः अवनीभारातद्भारायावताराये राजानस्तेषामंतकोनाशक इतिवासुदेवः स्वच्छंदं स्वाधीनानांव्रजसुन्दरीजनानां मनस्तोषोचितप्रीतौ प्रदोषोरात्रिमुखं व्रजजनधूमनारंजकश्चंद्रः रात्रौचंद्रदृष्ट्वास्त्रियः हृष्टाभवंतिपुनःकीदृशः कंसस्यध्वंसतोरस्योधूमकेतुः उपग्रहः कंसेसुखं ध्वंसयतिस्वसौंदर्यादिनाशकं सध्वंसनएव धूमकेतुरितिवा अनेननायकादयोगुणाः कथिताः ॥ कंसोसुरेसुखध्वंसनकारकेपीतियादवः ॥ धूमकेतुःस्मृतावह्नौविनाशस्याभि सूचकइतिहलायुधः॥ अलङ्कारेपिनेपथ्यं नटावरणकेपिच त्रिलोचनः ॥ मुग्धः सुन्दरमूढयोरित्यमरः ॥ ५ ॥ श्रांतासित्वंकमलनयनेदूरमभ्यागतासि स्निग्धच्छायां कलयसुभगे माधवीनांनिकुंजम् ॥ इत्थंराधांमधुरवचनैः श्रोतृपीयूषपूरैरास्वास्याथ चिरपरिहृतं प्राप्तवान्नन्दसूनुरिति ॥ ५ ॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंसशिवदासात्मजवनमालि

भट्टविरचितायांवनमालिसंज्ञीविन्यांगीतगोविंदटीकायां

साकांक्षपुण्डरीकाक्षोनामपञ्चमःसर्गः॥ ५ ॥

अथतांगन्तुमसक्तांचिरमनुरक्तांलतागृहेदृष्ट्वा । तच्चरितंगोविन्देमनसिजमंदेसखीप्राह ॥ १ ॥

पद्वेकामथरत्रासाखिभोराधांविलोक्यताम् । न्यवेदयत्सहचरी श्रीकृष्णंगमनाक्षमम् ॥ एवंकृष्णाभिसरणं निरूप्यतांलतामन्दिरे स्थापयित्वातच्चरितं कृष्णंप्रत्याह अथे

तिअथेत्यनंतरं मङ्गलंवासखी गोविंदेविपयीकृत्यतच्चरितं श्रीराधाचरितं प्राहोत्राचकिं कृत्वालतामन्दिरे चिरकालमनुरक्तांसक्तांदृष्ट्वाकीदृशी अनंगेनगंतुमशक्यं चलितुमसमर्थांकीदृशेमनसिजेनकामेनमंदेव्यथितहृदयेमनसिजो मंदस्तुच्छोयास्यादितिवा ॥ मन्दः खलेमंदगतेमूर्खेशन्यल्परोगिणोरितिविश्वः हेतुरुक्तिरलङ्कारः ॥ १ ॥

## गुणकरीरागेरूपकताले ॥

पश्यतिदिशिदिशिरहसिभवंतम् ॥ त्वदधरमधुरमधूनिपिबंतम् ॥ १ ॥ नाथहरेजयनाथहरे सीदतिराधावासगृहे ॥ ध्रुपदं ॥

सख्युक्तंगीतेन प्रथयतिपश्यतीत्यादिना गुणकरीरागेरूपकताले रागलक्षणं॥ रतौ शुकंकांतकृतमतीक्षामालालयंती मृदुपुष्पतल्पात्। इतस्ततःप्रेरितदृष्टिमात्रां गुणकरींतां मुनयोवदंति॥ तालःपूर्ववत्ध्रुवस्थापिता वासकसज्जेयंवासवेश्मनि सुकल्पिततल्पेवासमागमविधिं विदधानावस्याति प्रियसमागमलज्जातामिहाकलयवासकसज्जामिति हेनाथ हेहरेराधावासगृहे निकुंजमंदिरेत्वद्विरहात्सीदति दुःखिताभवति दुःखमेवाहसारहस्ये कांतेभवंतंत्वामेवदिशिदिशिसर्वदिशासुपश्यति विलोकयति कीदृशंत्वां त्वत्तस्याःयोधरस्तदेवमधुरंस्वादु मधून्यमृतानिपिबंतं धन्योहमितिसादरेण पानंकुर्वंतं एतेनान्याधरमधुपानममधुरत्वादपानमेवेतिभावः त्वदधरइतिपाठेस्वच्छन्दोऽन्यवाचकः ॥ १ ॥

त्वदभिसरणरभसेनवलंती ॥ पततिपदानिकियंतिचलन्ती ॥ २ ॥

कुतोनायातितत्राह त्वदभिसरणरभसेन रसोत्साहवेगेन वलंती यद्वतं तल्पमितिर्वारंवारंगच्छन्ती पततीमूर्च्छया अनेन त्वयैव तत्र गंतव्यमितिभावः ॥ कीदृशी कियंति पदानिचलंती तवदर्शनार्थं नाधिकं गंतुंपारयतीत्यर्थः तर्हि कथं जीवतितत्राह सा तव रागानुलेशेनइह तवगुणानुकथनेन वा परंकेवलंजीवति जीवनहेतुरन्योनास्तीत्यर्थः२ ॥

विहितविशदविसकिसलयवलया ॥ जीवतिपरमिह तवरतिकलया ॥ ३ ॥

कीदृशी विहिताकृतांविशदाः शुभ्राविसकिशलयमृणालसूत्रवलयाः कंकणानियया वलयः कंकणेपिविश्वः वलयश्चीकिशलयमित्यमरः मरालंविसमित्यपि कलाकेशकला सुचेति त्रिलोचनः ॥ ३ ॥

मुहुरवलोकितमंडनलीला ॥ मधुरिपुरहमितिभावन शीला ॥ ४ ॥

मुहुर्वारंवारं वीक्षितोवर्हावतंसकुण्डलकंकणादीनां मण्डनस्यालङ्कारस्य लीलाविलासो यया तामेवाह मधुरिपुरहमिति भावेन ध्यानेन शीलंस्वभावोयस्याः भ्रांतिनामायमलङ्कारः ॥ ४ ॥

त्वरितमुपैतिनकथमभिसारम्॥ हरिरितिवदतिसखीमनुवारम् ॥ ५ ॥

एवं त्वत्संगंविना न तस्या विरहतापशान्तिरित्याह हरिःकामतापहरोपि त्वरितं शीघ्रमभिसारं सुरतस्थानं कथंनोपैति स्वयमेवकुतोनागच्छति इति सखींप्रति अनुवारं वदति ॥ ५ ॥

श्लिष्यतिचुम्बतिजलधरकल्पम्॥ हरिरुपगतइतितिमिरमनल्पम् ॥ ६ ॥

अनुलक्षीकृत्यभ्रमेण स्वयमेवाह हरिःउपगतः प्राप्त इति अनल्पं गाढं तिमिरमन्धकारंमेघतुल्यं श्लिष्यत्यालिंगति चुम्बतिच स्निग्धनीलत्वाच्छ्रीकृष्णस्यसाम्यमिति६॥

भवतिविलम्बिनिविगलितलज्जा ॥ विलपतिरोदितिवासकसज्जा ॥ ७ ॥

किंच भवति त्वयि विलम्बिनिविलम्बंकुर्वति गतलज्जा सा विलपति रोदिति कीदृशी वासकसज्जा सुरतकृतसन्धानाकल्पं समूहे सदृशे शक्रेश्वेपि मेदिनीकारः ॥ ७ ॥

श्रीजयदेवकवेरिदमुदितम् ॥ रसिकजनंतनुतामतिमुदितम् ॥ ८ ॥

गीतसंग्रहमाह श्रीजयदेवकवेरुदितं भणितमिदं गीतं रसिकजनं श्रीराधाकृष्णशृंगाररसांतःकरणं अतिशयेनानंदितं तनुतां विस्तारयतु ॥ ८ ॥

विपुलपुलकपालिः स्फीतसीत्कारमंतर्जनितजडिमकाकुव्याकुलंव्याहरन्ती॥ तवकितवविधायामन्दकन्दर्पचिन्तां रसजलनिधिमग्नाध्यानलग्नामृगाक्षी ॥ ९ ॥

गीतार्थश्लोकसंग्रहेणाह विपुलेति हेकितवधूर्त वंचकेति कावा सामृगाक्षी मृग नयनी ध्यानेनाशङ्कासती तवामन्दकन्दर्पचिन्तां कोटिकामस्मरणं विधाय कृत्वा रस जलनिधौ शृङ्गाररससागरे मग्ना बभूवेति शेषः रससागरनिमग्नचेष्टितमाह विपुलाः प्रचुराः पुलकानां रोमांचानां पालिः पंक्तिर्यस्यां पुनः कीदृशी स्फीतः समृद्धः सीत्कारो यत्र तं तथा अन्तश्चित्ते जनितमुत्पादितं जडिमा जाड्यमनंगविकारं यथा काकु व्याकुलं ध्वनिविकारविशेषण आकुलं यथा तथा व्याहरन्ती भावनया तव करनी व्युन्मोचनासकं विचार्य निषेधवाक्यैर्वदंती इत्यर्थः भ्रमोत्प्रेक्षेवालंकारः ॥ १ ॥

अंगेष्वाभरणंकरोतिबहुशःपत्रेपिसंचारिणि प्राप्तं त्वांपरिशंकतेवितनुतेशय्यांचिरंध्यायति ॥ इत्याकल्पविकल्पतल्परचनासंकल्पलीलाशतव्यासक्तापिवि नात्वया वरतनुर्नैषानिशांनेष्यति ॥ २ ॥

संलग्नेनेव दर्शयत्यंगेत्यादि हेहरे एषावरतनुः सुन्दरांगी अस्वस्थांगी वेति छेद त्वयाविना निशांरात्रिं न नेष्यति गमयिष्यति किंच साअंगेषु करचरणादिष्वाभरण मलंकारं बहुशोवारंवारं करोति पत्रेपिसंचारिणि चलिते सतित्वां प्राप्तमागतं परिशं कते वितर्कयति त्वामागतं ज्ञात्वा शय्यां शयनीयं वितनुते रचयति श्रीकृष्णसंगमे म याइदं कर्तव्यमिति ध्यायति चिन्तयति इत्यनेन प्रकारेणाकल्पो भूषणं विकल्पस्तर्कः शय्यारचना बहुविलासशतमेतेषु व्यासक्ता प्रसक्तापि ॥ तल्पंच शयनेपिस्यात्तल्पमट्टि कलत्रयोरिति विश्वः ॥ आकल्पोवेषेन यथा इत्यमरः तर्कोविकल्पः शंकाचेतिसंकल्पः कर्ममानसमित्यपि ॥ २ ॥

किंविश्राम्यसिकृष्णभोगिभवने भाण्डीरभूमीरुहि भ्रातर्यासिनदृष्टिगोचरमितःसानन्दनन्दास्पदम् ॥ राधा यावचनंतदध्वगमुखान्नन्दान्तिकेगोपतो गोविन्दस्यजय न्तिसायमतिथिप्राशस्त्यगर्भागिरः ॥ ३ ॥

इतिश्रीगीतगोविन्देवासकसज्जावर्णनेषष्ठःसर्गः ॥ ६ ॥

सर्गान्तेकविःशमाशास्ते किमिति गोविन्दस्य गिरो वाण्यो जयन्ति कीदृशाः सं ध्याकालीनातिथिस्वागतास्तुतिवचनं गर्भेषुयासांताः केचिन्नंदयामस्यराधायावचनं

अध्वगमुखात्कृत्वा नन्दन्ति हर्षं प्राप्नुवन्ति बहुवारंवारं वचनमरे किंच वाह देभ्रातः पाथिकः भांडीरभूमिरुहि भांडीरवटे किं विश्राम्यसि विश्रामं कृत्वा विश्रामाभावे हेतुमाह कृष्णस्य भोगिनः भवने संभोगमन्दिरे किंच आनन्दसहितं नंदं गृहं किमिति इतः नयासितश्च दृष्टिगोचरं संनिहितमिह शून्यगृहत्यागेन महद्गृहस्थेनच कृतार्थो भविष्यतीतिभावः व्याजोक्तिरलंकारः ॥ यावत्साक्षान्नतवाङ्गसंगस्तावद्व्यथैवाथपरि श्रमोस्याः ॥ ध्यानेन किं हन्तमुहुः सरस्यात्दृष्टोपसाम्यत्यनुपानसाध्येति ॥ ३ ॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंस शिवदासात्मज श्रीवनमालिभट्ट
विरचितायां वनमालिसंजीविन्यां श्रीगीतगोविन्दटीकायां
वासकसज्जावर्णनेपष्ठःसर्गः ॥ ६ ॥

**अत्रांतरेचकुलटाकुलवर्त्मपातसंजातपातकइवस्फुटलाञ्छनश्रीः ॥ वृंदावनांतरमदीपयदंशुजालैर्दिक्सुंदरीवदनचंदनबिंदुरिंदुः ॥ १ ॥**

अभिसारिकाभिसरणप्रत्यूहमलिनद्युतिः । ज्योत्स्नाभिसारं कलयत्विंदुरुद्गतसभ्रमे ॥ एवमुभयोरनुरागं निरूप्यरसांतरं प्रकटयश्चंद्रदर्शनं राधाविरहमाह अत्रांतर इत्यादि अत्रांतरेऽस्मिन्कृष्णविलंबे इंदुश्चंद्रोंशुजालैः किरणसमूहैर्वृंदावनांतरमध्यम दीपयत् प्रकाशकवान् मकमदीप्तं चकारेति वा कीदृशः दिक्एव सुंदर्यानायिकोरामास्त द्वदने चंदनस्य बिंदुस्तिलकः अथवा दिक्सुंदरी श्रीराधातद्वदने चंदनबिंदुः कीदृश स्फुटव्यक्ता लांछनस्य कलंकस्य श्रीशोभायत्र कीदृश इव कुलटा कुलस्याभिसारिका समूहस्य वर्त्मपातेन संकेतमार्गप्रतिरोधेन संजात मुत्पन्नंपातकं यस्याः तादृश इव इंदुः कुमुदबांधव इत्यमरः चिह्नं लक्ष्मचलांछनमित्यपि किरणोस्त्रिमयूखांशुरिति ॥ १ ॥

**प्रसरतिशशधरबिंबेविहितविलंबेचमाधवेमधुरा॥ विरचितविविधविलापंसापरितापंचकारोच्चैः ॥ २ ॥**

एवं विप्रलंभमुक्त्वा विप्रलंभहेतुं प्रपंचयति प्रसरतीति साराधोच्चैरत्यर्थं परिताप श्रीकृष्णानागमनानविंनदुःखंचकार कीदृशं विरचितः कृतो विविधो नानाप्रकारो धूर्तशठवंचककामीत्येवं रूपगुणकीर्तनरूपो वालिवालोयत्र कीदृशः नायकोधूर्त इति विधुरा विह्वला कस्मिन्सति शशधरबिंबे चंद्रमंडले प्रसरति उद्गच्छति माधवे राधा वरप्रियवसंतप्रिये वा विहितविलंबे कृतविलंबे च सति ॥ २ ॥

गौड़मालवरागेप्रतिमठताले ॥

कथितसमयेपिहरिरहहनययौवनम् ॥ ममविफलमिदममलरूपमपियौवनम् ॥१॥ यामिहेकमिहशरणंसखीजनवचनवंचिता ॥ ध्रुपदम् ॥

यथा श्रीकृष्णः किं गृहेनवनेनेति कृतवान् तथा राधापि कृतवतीति निरूप्यते किंचोक्तं विलापमेव दर्शयति कथितेति विप्रलब्धानायिकेयं ॥ प्रेष्यदूती स्वयंगत्वा संकेतंनागतःप्रियः । यस्यांतेनविनादुःस्थाविप्रलब्धातुसामतेति ॥ गौड़मालवरागे प्रतिमठताले इहास्मिन्समये निर्जने वा कं जनं प्रतिशरणंयामि कं जलं वा प्रविशामि किं विशिष्टाहं सखीजनवचनैः श्रीकृष्णः शीघ्रं स्वयमेवागमिष्यति इति वंचिता प्रतारिता वंचनामेवाह अहह इति खेदे हरिः कथितसमयेपि निविड़ांधकाररूपे संकेतारूये वा वनं न ययौ न जगाम तदागमनं विना इदं ममयौवनममलं सुंदररूपं स्वच्छरूपमपि विफलं निरर्थकं ध्रुपदं ॥ कषायकेच मधुपे सुखशीर्षजलेषु चेति विश्वः शरणं गृहरक्षित्रोरित्यमरः विरोधोक्तिरलंकारः ॥ १ ॥

यदनुगमनायनिशिगहनमपिशीलितम् ॥ तेनममहृदयमिदमसमशरकीलितम् ॥ २ ॥

किञ्च यस्य श्रीकृष्णस्यानुगमनायान्वेषणायस्तुरतेन सन्तोषयितुं निशि रात्रौ गहनमपि निर्जनवनमपि मयाशीलितं सेवितमनुभूतं वा तेन श्रीकृष्णेन निमित्तभूतेन ममहृदयमसमशरेण कामबाणेन कृष्णागमनाभावात् कीलितम् बद्धम् ॥ २ ॥

ममभरणमेववरमतिवितथकेतना ॥ किमितिविषहामिविरहानलमचेतना ॥ ३ ॥

एवं श्रीकृष्णेन वञ्चितायाममममरणमेव वरं श्रेष्ठं मरणे विरहानलाभावात् किञ्च अहं किमिति विषहामि विरहानलंसहामि कीदृशं अपि वितथकेतना. अतिशयेन वितथं मिथ्याभूतं गृहंशरीरं यथा कीदृशी अचेतना ज्ञानशून्या श्रीकृष्णागमनप्रत्याशारहितत्वात् वितथं त्वनृते व्यर्थे हैमे केतनंलाञ्छने शृङ्गे गोत्रे गेहोपमन्त्रण इति विश्वः चेतनं रूपदेशोस्याःप्रत्याशायांचक्षेतनामित्यपि विरोधोक्तिरलङ्कारः ॥ ३ ॥

मामहहविधुरयतिमधुरमधुयामिनी ॥ कापिहरिम
नुभवतिकृतसुकृतकामिनी ॥ ४ ॥

किञ्च अहहेत्याश्चर्ये मधुरमधुयामिनी मनोज्ञवसन्तरात्रिः परमानन्दप्रदामां विधुरयति विह्वलयति कापिकृतसुकृतकामिनीकृतपुण्यपुञ्जाकान्ता हरिं श्रीकृष्णमनुभवति भुंक्तेभजतेवा अथवा कापि सदृशी सुकृते श्रीकृष्णालिङ्गनादिषु पुण्यंयया तादृशी कामिनी इदानीं मतादृग्विधाहमिति श्लेषमेवानुभवामीतिभावः इयमुन्मादावस्था स-म्भवतिभावः ॥ ४ ॥

अहहकलयामिवलयादिमणिभूषणम् ॥ हरिविरहद
हनवहनेनबहुदूषणम् ॥ ५ ॥

किञ्च अहह इति खेदेऽहं वलयादिमणिभूषणं कङ्कणाद्यलङ्कारं कलयामि धारयामि कीदृशं हरिविरहदहनवहनेन कृष्णवियोगवह्निधारणेन बहुदूषणमतिशयपापाचारंप्रियदर्शने स्त्रीणांश्रृङ्गारसाफल्यमितिभावः ॥ ५ ॥

कुसुमसुकुमारतनुमतनुशरलीलया ॥ स्रगपिहृदिहं
तिमामतिविषमशीलया ॥ ६ ॥

भूषणान्येवाह न केवलंहरिविरहोदहति स्वकरकृता स्रगपिमाला हृदिकृताप्यतनुशरीरलीलयाऽनंगबाणविलासेन मां हंति पुष्पवत् कोमलदेहां कादृश्या अतिशयेनाति विषमंदारुणंशीलं स्वभावोयस्याः वज्रादपि अतिकठोरयेतिभावः पुष्पं प्रसूनंकुसुमंनोस्त्रुग जीवनमिति रत्नाकरः ॥ ६ ॥

अहमिहनिवसामिनगणितवनवेतसा ॥ स्मरतिमधुसू
दनोमामपिनचेतसा ॥ ७ ॥

इहनिकुंजेऽहं तदागमनाय न निवसामि किंच साम्येव तथापि मधुसूदनो ममाधरपानकर्तामां चेतसाचित्तेनापि न स्मरति कीदृश्यहं गणिताः परिसंख्याताः श्रीकृष्णान्वेषणान्यथने चेतसालतायया ॥ ७ ॥

हरिचरणशरणजयदेवकविभारती ॥ वसतुहृदियुवति
रिवकोमलकलावती ॥ ८ ॥

किंच हरिरिति हरिचरणौशरणंयस्य जयदेवकविभारतीवाणी सरसांतःकरणानां हरिवतूनुकेवकामिनीनां युवतिरिव कीदृशी सुकुमारांगीचारुवर्णा कामकलाकुशला वा भारत्या विशेषणं वा कोमलकलायुक्ता यथा युवतिप्रणयकलहादिना शोभावती भवती तद्वद्यापि भारती कोमलमुखोच्चारणादिनेतिभावः ॥ ८ ॥

**तत्किंकामपिकामिनीमभिसृतःकिंवाकलाकेलिभिर्बद्धोबन्धुभिरन्धकारिणिवनोपान्तेकिमुभ्राम्यति॥कान्तःक्लान्तमनामनागपिपथिप्रस्थातुमेवाक्षमः सङ्केतीकृतमंजुवंजुललताकुंजेपियन्नागतः ॥ १ ॥**

एवं विप्रलम्भाहरौ नानाशङ्काञ्जनयंतीति तर्कमाह तदितिकान्तः श्रीकृष्णः सङ्केतीकृतअभिसरणस्थलं सम्पादितः मञ्जु मनोहरः वञ्जुललताकुञ्जेवेतसलतामन्दिरे य यस्मात् क्रीड़ार्थंनागतः तत्तस्मात् किं वा कामपि कामिनीं कामातुरां कमनीयां वा भिसृतः सन्मुखोगतानुगतोवा किं वा कलाकेलिभिर्व्रजयुवतिहास्यादिक्रीड़ाभिर्बन्धो यं यन्त्रितः किं वा बन्धुभिर्मित्रैः कार्यांतरे प्रीतरितः स्वयंविचार्यत्वंहेतुतरमाह अन्धकारिणि निविड़ान्धकारेवनोपान्ते वनसमीपेऽभ्यार्शेनिकटेऽवाभ्राउपान्ते वा पाठः कीदृशः क्लान्तं मद्वियोगेनदुःखितं मनोयस्य पुनः कीदृशः मनागप्यल्पमपि पथिमार्गेप्रस्थातुंमार्गे तुमक्षमअसमर्थः ततो विलम्बइतिभावः वितर्केसंशयेदच्चे किमुसंकीर्त्यते बुधैरितिधरणिः एवं बहुधावितर्कयन्ति सखीमाह ॥ १ ॥

**अथागतांमाधवमंतरेणसखीमियंवीक्ष्यविषादमूकाम्॥ विशङ्कमानारमितंकयापिजनार्दनंदृष्टवदेतदाह ॥ २ ॥**

अथेति अथानन्तरं इयंराधादृष्टवतस्वदृष्टार्थमिव एतद्वक्ष्यमाणंसखींमाह उक्तवती किंकृत्वा माधवमन्तरेण श्रीकृष्णंविनागतां वीक्ष्यदृष्ट्वा कीदृशीं विषादमूकां दुःखातिशयेन वक्तुमसमर्था कीदृशी जनार्दनं विशंकमानारमितंकयातिविशङ्कमानाशङ्काम्प्राप्ता जनार्दनस्यविरहिजनसन्तापकत्वमुचितमितिशब्दार्थः अर्दधातुः हिंसार्थे भजनानर्दयतीति ॥ २ ॥

**वसन्तरागेएकतालीताले ॥**

**स्मरसमरोचितविरचितवेशा ॥ गलितकुसुमदलवि**

**लुलितकेशा ॥ १ ॥ कापिचपलामधुरिपुणाविलसतियुवतिरधिकगुणा ॥ ध्रुपदं ॥**

स्मरेति वसंतरागे एकतालीताले रागतालध्रुवाणां लक्षणमुक्तमेव हे सखि कापि युवतिः भ्रजचधूर्मधुरिपुणा श्रीकृष्णेन सह विलसति क्रीडति कीदृशी अधिकगुणा मत्तोधिका नृत्यकुशल सौंदर्यादयोगुणायत्र मद्विलासमंदिरगमनोत्कंठितमपि श्रीकृष्णं स्वगुणैराकृष्यान्यत्रनीतमिति तद्गुणाधिक्यं सूचितं कीदृशी स्मरसमरे कामसंग्रामे उचितोयोग्योविरचितः कृतोविशेषोऽलङ्कारस्रक्चन्दनसंभोगादिर्ययासा चिबुकमुद्धृत्य चुंबितेतिध्वनिः अथवा स्मरसमरोचितो विरचितः कृतः श्रीकृष्णेनवेषो यस्यासा अलङ्कारभिधानेनैव कृतस्मरसंग्रामचिह्नमाह गलितकुसुमैः पतितपुष्पैर्दरं किंचिल्लुलिताः ईषन्व्याप्ताकेशाः यस्याः सा ॥ १ ॥

**हरिपरिरम्भणवलितविकारा ॥ कुचकलशोपरितरलितहारा ॥ २ ॥**

पुनः कीदृशी हरिपरिरम्भणेन श्रीकृष्णालिङ्गनेनवलितो जातो विकारोनङ्गोद्रेको यस्याः कीदृशी कुचकलशयोरुपरितरलितश्चंचलो हारोमुक्ताहारोयस्याः तरलित इत्यनेनालिङ्गनं सूचितं कलशशब्देन नामोन्नतामलं स्थूलं त्वं चेतिध्वनिः ॥ २ ॥

**विचलदलकललिताननचन्द्रा ॥ तदधरपानरभसकृततन्द्रा ॥ ३ ॥**

कीदृशी विचलद्भिः कंपमानैरलकैः चूर्णकुन्तलैः ललितो मनोहरो आननचंद्रोमुखमेव चंद्रोयस्याः तस्य श्रीकृष्णस्याधरपानरभसेन वेगेन कृता तन्द्रा सुरतसुखानुभवरूपा चक्षुर्निमीलनं वा यथा एतेन तदधरामृतपानैर्नैवमूर्च्छितेतिध्वनिः रभसोवेगउत्साह इत्यमरः ॥ ३ ॥

**चंचलकुण्डलदलितकपोला ॥ मुखरितरशनजघनगतिलोला ॥ ४ ॥**

चंचलेति चंचलाभ्यां कुण्डलाभ्यां दलितौ संघृष्टौकपोलौयस्याः सा पुनः कीदृशी मुखरिताशब्दसहिता रशनाकांची यस्मिन् जघनेतस्य गत्याचांचल्येन लोलाचंचला ४॥

**दयितविलोकितलज्जितहसिता ॥ बहुविधकूजितरतिरससरसिता ॥ ५ ॥**

दयितेति दयितस्य कृष्णस्य विलोकितेन मुखवीक्षणेन लज्जितं संजातलज्जं हरितं हास्यं यस्याः सा पुनः कीदृशी बहुविधं पिकशिखिकलहंसादीनामिव नानाप्रकारकूजितंयत्र एतादृशोरतिरसः क्रीडारसस्तेन रसिताढ्या ॥ ५ ॥

विपुलपुलकपृथुवेपथुभङ्गा ॥ श्वसितनिमीलितविकसदनङ्गा ॥ ६ ॥

विपुलेति विपुलाबहुलाः पुलकारोमांचायस्याः पृथुर्महान्वेपथुः कंपोभंगइवयस्याः साचपुनःकीदृशी श्वसितंसुरतायासेन जनितो निःश्वासः निमीलितं परमानन्दावाप्त्याजनितं नेत्रनिमीलितंचताभ्यां विकसन्प्रकटीभवन्ग्रनङ्गः कामोरेतोलक्षणोयस्याः सानिभिखिलेत्यनेन च्युतकालः सूचितः ॥ ६ ॥

श्रमजलकणभरसुभगशरीरा ॥ परिपतितोरसिरतिरणधीरा ॥ ७ ॥

श्रमेति श्रमजलकणभरेण सुरतायासघर्मजलाधिक्येन सुभगंमनोज्ञं शरीरंयस्याः साएतेनसात्विकभावोत्पत्तिः सूचिता सात्विकाभावाः पूर्वमुक्ताः पुनःकीदृशी उरसिपरिपतिता कृष्णवक्षस्थलं प्राप्यस्थितारतिः सुरतं रणइवतत्रधीरा ॥ ७ ॥

श्रीजयदेवभणितंहरिरमितम् ॥ कलिकलुषंजनयतुपरिशमितम् ॥ ८ ॥

श्रीजयदेवेति श्रीजयदेवभणितमुक्तं वर्णितमित्यर्थः यद्धरेःरमितं कृष्णस्यसंभोग. स तत्कलेः कलियुगस्य कलुषं पापं गायकानांश्रोतॄणां च परिशमितं शांतंजनयतु शमनं करोतु ॥ ८ ॥

विरहपांडुमुरारिमुखांबुजद्युतिरयंतिरयन्नपिवेदनाम्॥ विधुरतीवतनोतिमनोभुवःसुहृदयेहृदयेमदनव्यथाम्१॥

विरहेतिअयेहेसखि चन्द्रदर्शन विषादेन सखींप्रतिब्रूते अयंविधुश्चन्द्रः ममहृदयेमदनव्यथां कामपीडां अतीवात्यर्थेन तनोतिविस्तारयति उद्दीपकविभावत्वात् कीदृशोविधु.विरहेण मद्वियोगेनपांडुधूसरं यन्मुरारेः मुखांबुजंकृष्णस्य वदनकमलं तस्यद्युतिरिवद्युतिर्यस्यसः पुनःकीदृशः वेदनामपितिरयन् आच्छादयन् व्यथाजनकत्वे हेतुमाह मनोभव कामस्य सुहृन्मित्रम् १ ॥

गुर्जरीरागेएकतालीताले ॥

समुदितमदनेरमणीवदने चुंबनवलिताधरे ॥ मृगम
दतिलकंलिखतिसपुलकं मृगमिवरजनीकरे ॥ १ ॥
रमतेयमुनापुलिनवनेविजयीमुरारिरधुना ॥ ध्रुपदम् ॥

पूर्वोक्तगीतेन कस्याश्चिद्विपरीतरतमुक्ता सखी तस्याएव नायककृतां क्रीडामाह समुदितेति ध्रुवरागतालानां लक्षणमुक्तमेव स्वाधीनभर्तृकेयं तस्याः लक्षणं ॥ यस्याः र तिगुणाकृष्टपतिःपार्श्वं न मुञ्चति ॥ चित्रविभ्रमासक्ता स्वाधीनभर्तृकायथेति ॥ हेस खीतिअधुनाइति अस्मिन्नेवावसरे या पूर्वमधुरिपुणा रमिता तामेव विजयी व्रजयुवतियू थजयेनानंगजयेन वा सकलसौंदर्यादिगुण जयेन वा निरशंक मुक्तलक्षणा मुरारिः श्रीकृष्णो यमुनापुलिनवने कृष्णातीरवने रमत इति विरोधोक्तेः किंरमते इति तद्विर हाग्निसन्तापो यमुनातीरवनं सेवत इतिभावः कीदृशेवने सम्यगुदित उपरिचितो मदनः कामो यत्र कीदृशेवने रमणीयायास्तव वदनं पुराभिवादनं यत्र कीदृशे वने चु म्बनाय वलितोनुकूलीकृतः पुराकृतवैवाधरो यत्र तस्मिन्वने रमणीवदने व्रजयुवतिमु खध्यानमात्रेमुखे वा सपुलकं रोमांचसहितं यथा मृगमदतिलकं तत्र ध्यानेन तस्याः साक्षाद्दालिंग्यालिखति कीदृशे वदने समुदितः समुचितो मदनःकामो यत्र कीदृशे चुम्ब नेन वलितश्चिबुकमुद्धृत्य संकोचितअधरो यत्र कस्मिन्कमिव रजनीकरे चन्द्रे मृगमिव मुखस्य चन्द्रसाम्यंमृगस्यतिलक साम्यं वलितं सेवते निशाचुम्बना कुंचनेपि चेति विश्वः यमुनातुयमस्वसेत्यमरः ॥ १ ॥

घटयतिसुघनेकुचयुगगगनेमृगमदरुचिरूषिते ॥ मणि
सरममलंतारकपटलंनखपदशशिभूषिते ॥ २ ॥

उद्गतामेव वर्णयति घटयति इत्यादि कुचयुगगगनेस्तद्वयोतुंगे निर्मलमुज्ज्वलं म णिसरं मुक्ताहारस्तमेव तारकपटलं नक्षत्रसमूहं घटयति यजयति आकाशस्थांशोभामत्र निर्माति कीदृशे सुघने निविडे समांचले वा पुनः कीदृशे मृगमदरुचिरूषिते कस्तू रीदीमिलिप्ते कुचयोराकाशस्य मृगमदलिप्तयोः पयोधरत्वेन मणिसरत्वेन नक्षत्रस मूहत्वेन च साम्य मित्युत्प्रेक्षारूपकालंकारः कीदृशे नखपदं नखक्षतं तदेव शशीतेन भूषितेऽलंकृते नखचिह्नसार्द्धं साम्यं तथथा सायके अर्द्धसंसारसंकथितं समासादिति अतिखंजेस्पृहायांच गभस्तौचरुचिस्त्रियामिति धरणिः ॥ नक्षत्रेचाक्षमध्येच तारकापि

चेति विश्वः ॥ सुघनंनिविडेप्रोक्तंविशालेदृढसारकइति वैजयन्ती ॥ आरोमणिसरोमुक्ता कांचनादिविनिर्मित इत्यपिच ॥ समूहे पटलपूजाभेदेपीतिभोजे ॥ २ ॥

घनचयरुचिरेरचयतिचिकुरेतरलिततरुणानने ॥ कुरुबककुसुमंचपलासुषमंरतिपतिमृगकानने ॥ ३ ॥

किंचघनेति श्रीकृष्णःसंप्रतिध्यानेन तवसमागमेतस्याश्चिकुरेजातावेकवचनंकेशे पुकुरुबककुसुमंशोणामम्लानपुष्पंच रचयति रचना विशेषंकरोति कीदृशे मेघसमूहवत् मनोहरे अन्ययासह रमणमाशंक्य किमर्थंखेदं प्राप्स्यामीतिध्वनिः कीदृशंचपलावत् विद्युत्वत्सुषमाशोभा यस्यतत् यथामेघेविद्युद्भातितथा च कुसुमानीति भावः कीदृशेरति पतिःकामः सएवमृगः तस्यवने यथाकाननेमृगस्तथा चिकुरेकामस्तस्याः करचरणादिषु कामः किमुवक्ष्यामिति पुनःकीदृशे तरलितानि चंचलीकृतानि तरुणानामाननानि श्रीकृष्णस्य वा येन यस्मिन्वा ॥ ३ ॥

जितविसशकलेमृदुभुजयुगलेकरतलनलिनीदले ॥ मरकतवलयंमधुकरनिचयंवितरतिहिमशीतले ॥ ४ ॥

किंचजितेति श्रीकृष्णस्तस्यामृदुभुजयुगले कोमलबाहुयुग्मे मरकतवलयं इन्द्रनीलमणिखचित कंकणमेव भ्रमरसमूहंवितरत्यर्पयति एतेनमरकतवलयस्य भ्रमरसमूहत्वेन भुजयुगलसौरभाधिक्यंसूचितमिति कीदृशे जितमभिभूतं निजसंमर्देनगौरवत याचा विसशकलेमृणालसमूहे येनकीदृशे हिमादपिशीतले विरहसंतापहारित्वात्कीदृशे करतलमेव कमलिनीदलं यत्रतुकंकणोवलयोमतइतिध्वनिः ॥ ४ ॥

रतिगृहजघनेविपुलापघनेमनसिजकनकासने ॥ मणिमयरशनंतोरणहसनंविकिरतिकृतवासने ॥ ५ ॥

किंचरतीति श्रीकृष्णः रतेःसुरतशृंगारस्यवा गृहेजघनेनितंबे मणिमयरशनंमुक्तामेखलां विकिरत्यर्पयति कीदृशंतोरणस्य वन्दनमालिकाया हसनंनिंदकं राशिसिंहासनोपविष्टेवंदनमालिका वध्यतइतिभावः कीदृशे विपुलापघने महत्तरसमांचले पुनःकीदृशे कामस्यसुवर्णासने एतेनगौरवत्वमतिशयेन सूचितमिति कीदृशे कृतं कामेनवासनं निवासो वा सुगन्धोवा यत्र अंगंप्रतिकोवयवोअयनोथकलेवरमित्यमरः ॥ वासनं वसने वाथस्थाने यानेच धूपन इतिविश्वः ॥ ५ ॥

**चरणकिशलयेकमलानिलयेनखमणिगणपूजिते ॥ बहिरपवरणंयावकभरणंजनयतिहृदियोजिते ॥ ६ ॥**

किंचरणेति श्रीकृष्णचरणपल्लवे यावकभरणं अलक्तपूर्णं जनयतिकरोतितत्रातनोः शोभार्थं कीदृशे हृदियोजिते नंदसूनुना मुभृशमति शयेन तु प्रेमातिशयात् स्वहृदयमर्पिते हृदितच्चरणं धृत्वायावकभरणंमाधवकंरत्वयतीत्यर्थः कीदृशे हृदिकमलायाः लक्ष्म्याः श्रीराधाया निलयेमंदिरेकीदृशे नखाएवमणिसमूहास्तैः पूजितेऽलंकृते कीदृशं वहिर्भूतमपवरणमावरणंयस्यस्पष्टमित्यर्थः आलक्तकालंकारेण ह्यनुरागोवहिः स्फुटजनितइतिभावः ॥ ६ ॥

**रमयतिसुदृशंकामपिसुभृशंखलहलधरसोदरे ॥ किमफलमवसंचिरमिहविरसंवदसखिविटपोदरे ॥ ७ ॥**

सखिखलार्थंहलंधारयति इति तस्य सहोदरे भ्रातरि निर्दयनखत्वतकर्तुः सहोदरे सदृशे कामपि नायिकां त्वादृशीं सुदृशंशोभनाक्षिं तच्चरणं रमयति सति इह विटपोदरे धूर्तलतानिकुंजे अफलं निःप्रयोजनं विरसं रसरहितं यथा तथा चिरं बहुकालं किं अवसं किमर्थं सुखितासिवद कथय मौनंत्यक्त्वा तत्संतोपार्थं गमनंप्रति सानुकूलवाक्यं कथयेत्यर्थः विटपोलवणे धूर्ते मूर्खेकेखदिरेपिचेतिविश्वः ॥ ७ ॥

**इहरसभणनेकृतहरिगुणनेमधुरिपुपदसेवके ॥ कलियुगचरितंनवसतुदुरितंकविनृपजयदेवके ॥ ८ ॥**

गीतफलमाह इहेति इह काव्यकर्तरि कवीनां नृपे कविराजे जयदेवके कलियुगस्य चरितं दुरितं पापं न वसतु न तिष्ठतु कीदृशे रसस्य श्रीराधाकृष्णशृंगारस्य भणनं कथनं यत्र कीदृशे कृतं हरेर्गुणसौंदर्यादि परिसंख्यायेन कीदृशे मधुरिपोः श्रीकृष्णस्य चरणसेवके मधुसूदनं पदं पूर्ववत् ॥ ८ ॥

**नायातःसखिनिर्दयोयदिशठस्त्वंदूतिकिंदूयसे स्वच्छंदंबहुवल्लभःसरमतेकिंतत्रतेदूषणम् ॥ पश्याद्यप्रियसंगमायदयितस्याकृष्यमाणंगुणैरुत्कंठार्तिभरादिवस्फुटदिदंचेतःस्वयंयास्यति ॥ १ ॥**

एवमन्यत्र गयुवती रमणोत्कर्षं श्रुत्वा संजातनिर्वेदा दूतीमाश्वसयन्निव स्वयमेवा ह नायात इति हे सखि हेदूति दौत्यकर्मकुशले यदि निर्दयोमदयाशून्योऽतएव शठो धूर्तः कुंठितानुरागो निगूढापराधो वा नायातः नागतस्तर्हित्वं किं दूयसे वृथासंतप्यसे किंच वंचकोपि स्वच्छंदंरमते अनागमने हेतुमाह बहुवल्लभो बह्वीनांवल्लभः प्रियोबह्वो वल्लभायस्येति च तदानयने ते तव किंदूषणं कोपराधोऽसामर्थ्यात् ननु तच्छ्रुत्वा गंतु मुदितामिवाह पश्याद्येति इदंमच्चेतः प्रियस्य वल्लभस्य श्रीकृष्णस्य संगमाय मिलनाया लिंगनाय वा अद्यशीघ्रं स्वयमेव वा यास्यति पश्यजानीहि कीदृशं दयितस्य प्रियस्य गुणैः सौंदर्यादिभिः आकृष्यमाणं वशीकृतं पुनः कीदृशं उत्कंठया प्रियदर्शनेनच्छा यर्यातिमनःपीड़ातस्याभरादाधिक्यादिव स्फुटवत् बहुधाभवत् वहिर्भवदिति वा अप रमपि वस्त्वंतरसंकुलेस्थानेस्थितं वस्तुशांकयथार्हं भवतिस्फुटति अनेकथाभवति च ए तेन श्रीकृष्णगुणानां प्राग्रहारित्वमुक्तमितिभावः नातः परंत्वया तदा नयनायासः कर्त व्यमिति ॥ १ ॥

## देशाङ्करागेरूपकताले ॥ १ ॥

## अनिलतरलकुवलयनयनेन ॥ तपतिनसाकिसलय शयनेन ॥ १ ॥ सखियारमितावनमालिना ॥ ध्रुपदं ॥

तत्र गतमयं चेतः संतप्तमेव भविष्यतीत्याह अनीति आक्रीड़ितायास्तु दुःखं समु चितमेव क्रीड़ितायाः क्लेशंपश्यवनं मद्वियोगाश्रुजलं तन्मालिना हे सखि यावनमालि ना रमिता क्रीड़िता सा किसलयशयनेन मृदुपल्लवतल्पेन न तपति न संतप्ताभवति अ पितुभवत्येव कुतः संयोगानंतरं विरहशंकयानुभूयतरसोतिदुःखप्रदो भवतीत्यरमिता वने रास्यमागता कीदृशेन वनमालिना अनिलेन वा पुनःतरलं चंचलं यत्कुवलयं कम लं तद्वन्नयने नेत्रे यस्य तेन अस्मिन् गीते संयोगवियोगौ ज्ञातव्यौ रागताल ध्रुवपदं पूर्ववत् ॥ १ ॥

## विकसितसरसिजललितमुखेन ॥ स्फुटतिनसामन सिजविशिखेन ॥ २ ॥

किं विकसितेति यारमिता वनमालिनेति सर्वत्रयोज्यं सा मनसिजविशिखेन काम बाणेन न स्फुटति विद्धानभवति अपितुभवत्येवेत्यादि पूर्ववत्सर्वं सर्वत्रयोज्यं कीदृशेन वन मालिना विकसितं प्रफुल्लं यत्सरसिजं कमलं तद्वल्ललितं मनोहरंमुखं यस्यतेन ॥ २ ॥

## अमृतमधुरमृदुतरवचनेन ॥ ज्वलतिनसामलयजप वनेन ३

किंच अमृतेति अमृतादति मधुराणि मनोज्ञानि मृदुतराणि अतिशयेन कोमला नि वचनानि भाषणानि यस्यनेन रमितापि मामलयजपवनेन चन्दनवायुना न ज्वलती ति पूर्ववत् संभोगेवियोगेच ज्वलत्येव अनेननायकस्य मियवचनादयो गुणानिरूपिता. ३

**स्थलजलरुहरुचिकरचरणेन । लुठतिनसाहिमकर किरणेन ॥ ४ ॥**

अपिच स्थलजलरुहाणां स्थलकमलानां जलकमलानांच रुचिरिवरुचिर्येषां ताह शः करचरणायस्यतेन कृष्णेन रमितायाः सा हिमकरकिरणेन चन्द्रकिरणसमूहेन न दहतिअपितुदहत्येवजलरुहं कामस्यबाणत्वेनैव ध्वनितं ॥ ४ ॥

**सजलजलदसमुदयरुचिरेण ॥ दलतिनहृदिचिरवि रहभरेण ॥ ५ ॥**

सजलेति सजलजलदस्य सोदकमेघस्य सम्यगुदयस्तद्वद्रुचिरेण मनोहरेण वन मालिना रमिता सा हृदि विरहभरेणन दलति अपितु विदीर्णहृदयाभवत्येव अनुक्रीडिता याः कथं विरहस्तत्राह विप्रयोगासमयत्वात् सजलेत्यनेन श्रीराधाविरहः श्रीकृष्णस्या श्रुपात इति भावः ॥ ५ ॥

**कनकनिकषरुचिशुचिवसनेन ॥ श्वसितिनसापरिज नहसनेन ॥ ६ ॥**

किंच कनकनिकषस्य सुवर्णं तेजस पाषाणस्य रुचिरिव रुचिर्यस्य तादृशं शुचि निर्मलं वसनं वस्त्रं यस्य तेन वनमालिना या रमिता सा परिजनहसनेन सर्वाजनपरि हासवाक्येन न श्वसिति अपि तु निःश्वासं करोतीति वसनमिति श्रीराधांगदीप्तिसा दृश्यात्पीतांबरधारणं नतु मण्डनार्थमिति भावः तद्यथा ॥ पीताम्बरं किमिति नन्दसु तोबिभर्ति नीलाम्बरं किमितिभानुसुतापि कामं ॥ मन्येदिनेपि निजजीवनधारणार्थं मा लिंगनं कलयतो वलनच्छलेनेति श्रृङ्गारः ॥ शुचिरुज्ज्वल इत्यमरः शुचिः शुद्धेनुपहत इति विश्वः निकषः कषपट्टिकेति हारावली ॥ ६ ॥

**सकलभुवनजनवरतरुणेन ॥ वहतिनसारुजमतिक रुणेन ॥ ७ ॥**

किंच सकलभुवने चतुर्दशलोके जनास्तेभ्योपि वरेण सुन्दरेण श्रेष्ठेनवा तरुणेनच य श्रीराधाख्यो श्रेष्ठस्तरुणा वा यस्यतेन वनमालिना या रमिता

साहजं पीडां न वहति न धारयति अपितु धारयत्येव कीदृशेन अतिकरुणेन दया तिक्रान्तेनानिर्दयेनेत्यर्थः कीदृशी सा अतिकरुणरसे नोपलक्षिता वा अस्यां संभोग वियोगश्चनिर्वाहितः ॥ ७ ॥

**श्रीजयदेवभणितवचनेन ॥ प्रविशतुहरिरपिहृदय मनेन ॥ ८ ॥**

श्रीजयदेवभणितं यद्वचनं गीतरूपं अनेन हरिर्मनोहरः संतापहारीवा शृण्वतां गायतां श्रीराधाया अपिहृदयं प्रविशतु प्रवेशं प्राप्नोतु ॥ ८ ॥

**मनोभवानन्दनचन्दनानिलप्रसीदरे दक्षिणमुञ्चवा मताम् ॥ क्षणंजगत्प्राणनिधायमाधवं पुरोममप्राणहरो भविष्यसि ॥ १ ॥**

एवं सखीवचनेन विस्मृतप्रियदोषामलयानिलमुपलभते प्रार्थयते मनोभवेति हेम नोभवानंदन चन्दनानिलमलयसमीर त्वंप्रसीद प्रसादंकुरु रेइत्याक्षेपसम्बोधने दक्षिणे नवामतां प्रतिकूलं मुंच दाहं संवारय हेजगत्प्राणविश्वप्राणभृतमाधवं श्रीकृष्णंक्षणं क्षण मात्र पुरोग्रेनिधायकृत्वा ममप्राणहरोभविष्यसि प्राणोत्क्रमणसमये श्रीकृष्णदर्शनमति वल्लभमिति जगतांप्राणं तत्वमनुचितंतवेतिभावः ॥ वामं सव्येप्रतीपेच द्रविणेवातिसुद रइतिविश्वः ॥ करुणस्तुरसे वृक्षे करुणामतेविश्वः ॥ १ ॥

**रिपुरिवसखीसंवासोयंशिखीवहिमानिलोविषमिव सुधारश्मिर्दूरंदुनोतिमनोगमम् ॥ हृदयमदयेतस्मिन्ने वंपुनर्वलतेबलात्कुवलयदृशांवामः कामोनिकामनिरं कुशः ॥ २ ॥**

पूर्वमलयानिलस्य प्राणहंतृत्वं विज्ञायोपालभ्यः संप्रतिसर्वानेवोपालभते रिपुरिवे ति अयं सखीभिः सहसम्यग्वासमवस्थानं रिपुरिव शत्रुरिव ममनोदुनोति संतापय ति किंच हिमानिलः स्वभावशीलोपि शिखीवाग्निरिव दुनोति दहति किंच सुधारश्मि श्चंद्रोपि विषमिव प्राणहर्तानायमेतेषामपराधः किंतु तस्मिन् कृष्णेगतेदूरं प्रस्थिते स ति एते तथाविधा जाता इति एवं तस्मिन् अदये निर्दये ममहृदयंचेतः बलाद्धठात् प्र सत पुन वायामाणामपि प्रसरति नलनाभिनिवेशत इत्यर्थं तत्रहेतु

नीलोत्पलाक्षीनां कामनिरंकुशस्त्वत्तदर्थं स्वेच्छाचारी किंच कुमिकः कृष्ण शिखीम यूरे दहने शिखोत्वाद्ब्रह्मचारिणीति हलायुधः ॥ २ ॥

**बाधांविधेहिमलयानिलपंचबाणप्राणान्गृहाणनगृहंपुनराश्रयिष्ये ॥ किंतेकृतांतभगिनिक्षमयातरंगैरंगानिसिंचममशाम्यतुदेहदाहः ॥ ३ ॥**

पूर्वंमलयानिलादयःशत्रुत्वेनज्ञाता इदानींतानेवमित्रत्वेननाचेनयाचामिति हेमलयानिल चन्दनवायोपरमशीतलाश्रयोपि ममबाधांपीडां विधेहिकुरु किंच्चहतस्ततोपि लोक्याह हेपंचबाण पंचबाणोति संबोधनंमुकरहिंसार्थमिति हेकामपंचभिर्वाणैर्मेप्राणान्गृहाण तानेवाह ॥ संमोहनःक्षोभनश्चदहनःशोषणस्तथा । उच्चाटनश्चकामस्य बाणाः पंचप्रकीर्त्तिताः॥ननुकथंगृहं प्रतिनयासितत्राह यथापुनर्भूयोगृहानाश्रयिष्येनयास्यामिश्रीनन्दात्मजं विनामलयानिलयादयोपि संतापकारका एवेतिभावः तेभ्योऽभीष्टमधामाक्ष्णांयाचते हेकृतांतभगिनि यमुने तेन वध्यमाणशांत्या किंयत्नत्वं ममभगिनीतरंगैः कल्लोलैर्ममांगानिसिंचजीवत्वात्सिंचनमेवाप्लावनमितिध्वनिः तेनासिंचनेनममदेहदाहः विरहाग्निजनितोदेहसंबंधीदाहःक्लेशः शाम्यतुदेहदाहः सोढुमशक्य अनेनमरणंभव त्वित्यर्थः यमुनातु यमस्वसेत्यमरः पीडाबाधव्यथादुःखमित्यमरः ॥ कामःपंचशरः स्मरइत्यपि ॥ ३ ॥

**प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकंराधायाश्चकितंविलोक्यहसतिस्वैरंसखीमण्डले । व्रीडाचंचलमंचलंनयनयोराधायराधानने स्मेरस्मेरमुखोयमस्तुजगदानन्दायनन्दात्मजः ॥ ४ ॥**

**इतिश्रीगीतगोविन्देनागरनारायणोनामसप्तमःसर्गः७ ॥**

सर्गांतेकविराशिषंब्रूते प्रातरित्यादिना सखीवचनैः शान्तिमलभमानां श्रीराधांदृष्ट्वा श्रीकृष्णएव जयदेवापदेशेन नान्यइति तदपि प्रकटीभूतो नान्यथाकविः कथं प्रत्यक्षानुभूतमिववर्णयेत् अयंनन्दात्मजोजगतामानन्दायास्तु कीदृशःश्रीराधामुखस्मेरैर्मुखपद्मनेन स्मेरमुखोदइतिभूतदन्तद्युतिः किंकृत्वा श्रीराधायाश्चकितं विलोक्यदृष्ट्वा कीदृशं व्रीड्या कामोद्भूतया चंचलंचलनमंचलं वक्षप्रदेशोपवस्त्रांचलं मानससंभोग चं ? भेतिभाव

पुनश्चकिंकृत्वा नयनयोरंचलमाधाय अंचलेन श्रीराधानयने वाससाछाद्येत्यर्थः क स्मिन्सानिसखीवृन्दे स्वच्छन्दं हसतिसति किंदृष्ट्वा प्रातः प्रभातेऽच्युतस्योरोवक्षोनील निचोलं नीलकंचुकावृतं संवीतपीतांशुकं परिकलितपीतांबरंच द्वयोश्चकितेच विलो क्य अथवा राधायाः संवीतपीतांबरं कृष्णस्यनीलनिचोलमितिवस्त्रं विलोक्यदृष्ट्वेति योजना ॥ ९ ॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंसशिवदासात्मजवनमालिभट्टविरचि तायांश्रीगीतगोविन्दटीकायांवनमालिसंजीविन्यांनागरनारायणो नामसप्तमःसर्गः ॥ ७ ॥

अथकथमपियामिनींविनीयस्मरशरजर्जरिताऽपिसा प्रभाते । अनुनयविनयंवदन्तमग्रेप्रणतमपिप्रियमाहसा भ्यसूयम् ॥ १ ॥

अष्टमेपादपतितं विलोक्य हृदयेश्वरम् ॥ उपालंभं बहुविधंराधाप्रेमालसमब्रवीत् ॥ अथ शब्दोमंगलार्थः साराधाकथमपिकष्टं यामिनींविनीय रात्रिं नीत्वा साभ्यसूयं सेर्ष्यं यथातथा प्रियं श्रीकृष्णमाह कीदृशी स्मरशरैः कामबाणैर्जर्जरिता विद्धापि कीदृशं प्रियं प्रभातेप्रातःकालेऽनुनयाय स्वापराधक्षमापनाय विनयं सांजलिकृतापराधमपिमां क्षमस्वे ति पुनरप्येवं नकरिष्यामीत्यादि वदन्तं कीदृशं अग्रेप्रणतमपि प्रकर्षेणानतं नम्रमपि गृ हीतचरणमित्यर्थः ॥ १ ॥

भैरवरागेयतिताले ॥

रजनिजनितगुरुजागररागकषायितमलसनिमेषम् ॥ वहतिनयनमनुरागमिवस्फुटमुदितरसाभिनिवेशम् ॥१॥ हरिहरियाहिमाधवयाहिकेशवमावदकैतववादम् ॥ तामनु सरसरसीरुहलोचनयातवहरतिविषादम् ॥ ध्रुवपदं ॥

खंडितानायिका तल्लक्षणं ॥ उल्लंघ्य समयं यस्याः प्रेयानन्योपभोगवान् । भोगल क्ष्मांकितःप्रातरागच्छेत्साहिखंडितेति ॥भैरवरागलक्षणं॥ सरोवरस्थेस्फटिकस्यमण्डपे सरोरुहैःशङ्करमर्चयंति । तालप्रभेदप्रतिपन्नगीता गौरीतनुर्नारदभैरवीमिति तालध्रुवयो र्लक्षणं पूर्वमेवोक्तं अभ्यसूयावचनमेवाह रजनीतिहरिहरिरिति काचित्पाठःहेमाधवमायाः कपटरूपायाः धवः स्वामी हे कपटचूडामणे विरहजनदु हेवसन्तेति वा

याहिनेत्रपथादितोगच्छ किंच हेकेशव प्रशस्तचिकुरसुन्दर शिखागणे प्रियाहृदयाहिको पावेशेन पुनरुक्तिः किंचोपालम्भान्तरमाह हेसरसीरुहलोचन कमलनयन या तव विषादं मनस्तापंहरति ॥ दूरीकरोति तां प्रियामनुसरगच्छकपटवाक्यंमावदश्रुतवादमेवाह श्रीकृष्णनयनं स्फुटं यथास्यात्तथानुरागमिव वहसिधारयसि कीदृशं रजनिजनितेन गुरुणा गरिष्ठेन जागरणस्य रागेण कषायितमारक्तीकृतं कीदृशं अलसेनालस्येन निमेषः पक्ष्म चपलं यस्य पुनः कीदृशं उदितः कथितः रससादयान्यानिका विषयश्रृंगाररसस्याभि निवेशो यस्य अथवा प्रियविशेषणं कीदृशं प्रियं रजनिजनितोयो गुरुर्जागरणंतेन कषा यितेईषदारक्ते लोचने यस्यतं कीदृशं अलसो निवेशो त्रेपः स्वरूपंच यस्य पुनः कीदृश उदितः प्रकटितः रसस्य श्रृंगाररसस्याभिनिवेशः परतंत्रता येन ॥ १ ॥

**कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूप म् ॥ दशनवसनमरुणंतवकृष्णतनोतितनोरनुरूपम् ॥ २ ॥**

पुनरपि प्रकारान्तरेणोपालम्भमाह कज्जलेति हेकृष्ण तवारुणरागेणाक्तं दशन स्य वसनमधरस्तनोः शरीरस्यानुरूपं तनोति विस्तारयति कीदृशं कज्जलेनांगनेन म लिनं श्यामं यद्विलोचनं तस्य चुम्बनेन विरचितं कृतं नीलिम्ना रूपं श्यामरूपं यस्य स्वभावमलिनस्य तवमालिन्यकरंमिति ध्वनिः ॥ २ ॥

**वपुरनुहरतितवस्मरसंगरखरनखरक्षतरेखम् ॥ मर कतशकलकलितकलधौतलिपेरिवरतिजयलेखम् ॥ ३ ॥**

किंच हेप्रिय तवेदंवपुः रतिजयलेखं सुरतविजयपत्रमनुहरति सदृशीकरोति कीदृशं स्मरसंगरे सुरतसंग्रामे खरानां तीव्राणां नखानां क्षताक्षतैर्जनिता रेखा यत्र कस्याइव मरकतशकले नीलमणिखण्डे कलिता निर्मिता कलधौतस्य सुवर्णस्य लिपे र्न्यासपंक्तिर्यस्याइव ॥ ३ ॥

**चरणकमलगलदलक्तकसिक्तमिदंतवहृदयमुदारम् ॥ दर्शयतीवबहिर्मदनद्रुमनवकिसलयपरिवारम् ॥ ४ ॥**

किंच चरणेति तवेदं हृदयं मदनद्रुमस्य कामवृक्षस्य हृदयान्तर्गतस्य नव किसल य परिवारं नूतनपल्लवसमूहं बहिर्दर्शयतीव प्रकटयतीव कीदृशं चरणकमलादन्यस्त्री पादपद्मात् गलतालक्तकाऽलक्तकेन सिक्तमक्षितं अन्योपि वृक्षः सिक्तमजः सपल्लवं प्रकटयति इतिध्वनि कीदृश उदार मनोहरम् ॥ ४ ॥

**दशनपदंभवदधरगतं ममजनयतिचेतसिखेदम्॥ कथयतिकथमधुनापिमयासहतववपुरेतदभेदम् ॥ ५ ॥**

इदानीं विदग्धमवलंब्योपालंभो पालम्भमाह दशनमिति भवदधरगतं तवाधरे स्थितं दशनपदं कयाचिद्दत्तं दन्तंममचेतसि चित्तेखेदं संतापं जनयति अन्यदीपकर जन्नतत्रणस्तावकेव युधिमांपीडयति भावः तदेवाह तवाप्येतद्वपुरधुना मयासह अभेदं कथं कथयति एतेन दोषदर्शनं नायके नायिकायाः कथितम् ॥ ५ ॥

**वहिरिवमलिनतरंतवकृष्णमनोपिभविष्यतिनूनम्॥ कथमथवंचयसेजनमनुगतमसमशरज्वरदूनम् ॥ ६ ॥**

अभेदमुक्त्वा पुनर्दोषमाह वहिरिति हेकृष्ण नूनं निश्चितं तवमनोपि चित्तमपि वहिरिवातिशयेन मलिनं भविष्यति वपुषः श्यामत्वादिति भावः कथंत्वया ज्ञातमित्यतआह कथमिति अथान्यथा माद्दशंजनमनुगतमनुसृतं त्वदेकशरणं तदभावे कथं वंचयसे प्रतारयसे कीदृशं असमशरज्वरेण दूनं संतप्तं तस्मात्तदस्तीति भावः ॥ ६ ॥

**भ्रमतिभवानबलाकवलाय वनेषुकिमत्रविचित्रम् ॥ प्रथयतिपूतनिकैववधूवधनिर्दयबालचरित्रम् ॥ ७ ॥**

पुनरपि क्रूरत्वेनोपालंभमाह भ्रमतीति भवान् अबलाकवलाय युवतीनांग्रसनार्थंअकवलायसुखाय वा वनेषु भ्रमति अत्रास्मिन्नर्थे किंविचित्रमाश्चर्यं न किमपीत्यर्थः तत्रहेतुमाह पूतनिकैव पूतनैववधू वधेदयारहितं बालचरित्रं बालचेष्टितं प्रथयति ख्यापयति न केवलं पूतनैवान्या खण्डितापि तल्लक्षणं ॥ निद्राकषायकलुषीकृतताम्रनेत्रो नारी नखव्रणविशेषविचित्रितांगः ॥ यस्याः कुतोपिगृहमेति पतिः प्रभाते सा खण्डितेतिकथिता कविभिः पुराणैरिति भरते ॥ बालेन त्वया कठिनाहता तरुणेन कोमलांगासे किंचित्रमिति भावः ॥ ७ ॥

**श्रीजयदेवभणितरतिवंचितखण्डितयुवतिविलापम्॥शृणुतसुधामधुरंविबुधाविबुधालयतोपिदुरापम्॥८॥**

गीतार्थंदुर्लभत्वेन कथयति श्रीति हे विबुधाः हे कृष्णक्रीड़ारसविभावना चतुराहेविबुधाः पण्डिताः इदं श्रीजयदेवभणितं कथितं रत्यासुरतेन वंचितायाः खण्डितमात्मानं मन्यमाना युवतिः श्रीराधा तस्या विलापं प्रातरागमनखचनशैथिल्यावलोकेन

स्वरभंगादि परिदेवनं श्रयुत कीदृशी लयतो मोक्षादपि ब्रह्मानन्दादपि दुरापं दुःप्रापं मे वं सुखं तत्रास्तीति भावः कीदृशं सुधामधुरं अमृतादपि मिष्टं न दिष्टं वा ॥ ८ ॥

तवेदंपश्यन्त्याःप्रसरदनुरागंबहिरिव प्रियापादालक्तच्छुरितमरुणद्योतिहृदयम् ॥ ममाद्यप्रख्यातप्रणयभरभंगेनकितव त्वदालोकःशोकादपि किमपिलज्जांजनयति ॥ १ ॥

गीतार्थं श्लोकेन संगृह्याह तवेदमिति हेकितवधूर्तत्वदालोकस्त्वद्दर्शनंप्रख्यातो यस्तवममापि प्रणयभरस्य प्रेमातिशयस्य भंगेन नाशेन शोकादप्यद्य किमप्यनिर्वचनीयां लज्जां जनयति कीदृश्या मम तवेदमीदृशं हृदयं मनश्चधूर्तंच प्रियायान्यस्त्रभार्यायाः पादालक्तेन यावकेन छुरितं मिश्रितं पश्यन्त्याः अतएवारुणच्छायां अरुणारक्तच्छायायां प्रियस्य तादृशं उत्प्रेक्षते बहिर्बाह्ये प्रसरन्निर्गच्छदनुरागमिव रागोप्यरुणोवर्ण्यते ॥१॥

अन्तर्मोहनमौलिघूर्णनवलन्मन्दारविस्रंसनस्तब्धाकर्षणदृष्टिहर्षणमहामंत्रःकुरङ्गीदृशाम् ॥ दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशःकंसरिपोर्व्यपोहयतुवः श्रेयांसिवंशीरवः ॥ २ ॥

## इतिगीतगोविन्देऽष्टमःसर्गः ॥ ८ ॥

श्लोकेनकविः सर्गान्तेमङ्गलमाचरति अन्तरिति कंसरिपोः श्रीकृष्णस्य वंशीरवो वो युष्माकं श्रेयांसि कल्याणानि व्यपोहयतुददातु कीदृशः कुरंगीदृशां हरिणाक्षीणा मन्तर्मोहनेन मौलिघूर्णनं शिरोधूननं मिलन्मन्दारस्य पारिजातपुष्पस्य विस्रंसनं पतनं यस्मात्सः कीदृशः स्तब्धानां सौंदर्यादिगुणाविष्टानां कामिनामाकर्षणो वशीकरणो दृष्टेहर्षणो नेत्रोत्साहकरं चेत्येवमादिसाधनमेव महामंत्रोयस्याः कीदृशः ॥ २ ॥

इतिश्रीगीतगोविन्दटीकायामष्टमःसर्गः ॥ ८ ॥

## गुर्जरीरागेरूपकताले ॥ १ ॥

हरिरभिसरतिवहतिमधुपवने॥किमपरमधिकसुखंसखिभवने ॥ १ ॥ माधवेमाकुरुमानिनिमानमये ॥ ध्रुपदं ॥

कलहांतरितेयं यायादपतितं कांतमात्मनो गुणगर्विता। निरस्य पश्चात्तपतिकलहांतरितातुसा॥ गुर्जरीरागे रूपकताले रागतालध्रुवपदलक्षणं पूर्वमेवोक्तं हरिरिति हे मानिनि माधवे मधुप्रिये श्रीकृष्णे मानं माकुरु संभोगविलंबनंमाकार्षीरित्यर्थः यतोमधुपवने वसंतवायौ वहतिसति हरिः सकलमनोहरः कामतापहरो वाऽतिसरति स्वयं वा गच्छति हे सखि भवने त्रैलोक्ये वैकुंठे श्रीकृष्णालिंगनसमादपरमुत्कृष्टमधिकं सुखमस्ति अपितु न किंचिदित्यर्थः अस्मादन्यंकुत्सितं सुखमितिभावः॥ १॥

**तालफलादपिगुरुमतिसरसम्॥ किंविफलीकुरुषेकुचकलशम्॥ २॥**

अधिकसुखमेव प्रपंचयति तालेति हे राधे त्वं कुचकलशं स्तनघटं किमर्थं विफलीकुरुषे निःफलंकरोषि श्रीकृष्णकरसमर्पणाभावादित्यर्थः कीदृशं तालफलादपि तालफलापेक्षया काठिन्यस्थौल्यास्यां वर्तुलत्वेन चातिगुरुमाधिकं कीदृशं अतिसरसमतिरसप्रदं शृंगाररससहितं वा रतिविरामेपि रसस्योत्पादकमित्यर्थः तालफलं भक्षणेन मादकमिमंत्ववलोकनमात्रेणेतिभावः॥ २॥

**कतिनकथितमिदमनुपदमचिरम्॥ मापरिहरहरिमतिशयरुचिरम्॥ ३॥**

इदमचिरं सांप्रतं अनुपदं प्रतिपदं कतिवारं किं न कथितं हरिं मापरिहर मात्यज कीदृशं अतिशयरुचिरमतिमनोहरं कीदृशं हरिं अचिरं विलंबासहं कीदृशं अनुपद्यते श्रीसमूहैरन्विषत इत्यनुपदं॥ ३॥

**किमितिविषीदसिरोदिषिविकला॥ विहसतियुवतिसभातवसकला॥ ४॥**

एवं श्रुत्वाश्रुमुखीमिवाह किमिति किमर्थं विषीदसि क्लेशंप्राप्नोषि विकला विगतकला गतकौशला विह्वला सती रोदिषिसंप्रतिदुःखं रोदनंच व्यर्थमिति सकला सर्वा युवतिसभा तरुणीसमाजस्तवत्वांहसति विगतकौशलांत्वामुपहसतीतिभावः॥ ४॥

**सजलनलिनीदलशीलितशयने॥ हरिमवलोकयसफलयनयने॥ ५॥**

हे सखि जलेति नलिनीपत्रसहितानि यानि जलानि तेषां शीलितमाश्रितं शयनं ययातत्संबुद्धिः अनेन तापाधिक्यं सूचितमितिभावः अथवेदृशेशयने हरिमागतमव

लोकय नयने सफलय सफलीकुरु किमर्थं मानाग्रहेण विरहसंतापमनुभवतीति ध्वनिः ॥ ५ ॥

जनयसि मनसि किमिति गुरुखेदम् ॥ शृणु मम वचनमनीहितभेदम् ॥ ६ ॥

हे राधे त्वं मनसि गुरुखेदं महत्कष्टं किमिति जनयसि उत्पादयसि तस्मान्मम वचनं वक्ष्यमाणं शृणु कीदृशं अनीहितोऽनाकांक्षितो भेदो वैरस्यं विरहो वा यत्र यदि न करोषि तदा वचनमपि तावच्छृणुष्वेति ॥ ६ ॥

हरिरुपयातु वदतु बहुमधुरम् ॥ किमिति करोषि हृदयमतिविधुरम् ॥ ७ ॥

वचनमेवाह हरिरिति हरिर्मनोहर उपयातु तव समीपमागच्छतु किंच बहुमधुरं तवानुनयवचनं वदतु त्वं हृदयं मनोऽतिविधुरमतिविह्वलं किमिति करोषि मानाग्रहेण तथा ॥ सौंदर्यसारः सखि नंदसूनुस्तस्यापि राधा सुहृदर्थ्यमूर्तिः । तस्याः कृष्णस्य प्रणयानुबंधस्तस्याभिमानोऽकथने सुमानइति ॥ ७ ॥

श्रीजयदेवभणितमतिललितम् ॥ सुखयतु रसिकजनं हरिचरितम् ॥ ८ ॥

श्रीजयदेवेन भणितमुक्तं हरिचरितं रसिकजनं श्रीराधाकृष्णभक्तिभावनाचतुरं सुखयतु आनंदयतु कीदृशं अतिललितं शृंगारहास्यस्निग्धमधुरवादादिगुणयुक्तं शृंगारमधुराचेष्टा यत्र तल्ललितं विदुरिति ॥ ८ ॥

स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये ॥ तद्युक्तं विपरीतकारिणि तव श्रीखंडचर्चा विषं शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १ ॥

गीतार्थसंग्रहश्लोकेनाह स्निग्धे इत्यादि हे विपरीतकारिणि विरुद्धविधायिनि तत्रातोहेतोस्त्वय्येतद्युक्तमेव किंतत् श्रीखंडचर्चा चंदनवार्तापि तव विषमिव गरलमिव दहति किंच शीतांशुश्चंद्रस्तपनः सूर्यइव संतापकोभवति किंच हिमं शीतलं हुतवहोऽग्निरिव दाहकोभवति किंच क्रीडामुदः केलिप्रमोदा यातनास्तीव्र वेदनाभवाः कुतएतद्विपरीतं तस्मिन्प्रिये कृष्णे प्रणमति नमस्कुर्वति सति यतस्त्वं परुषासि कठिनासि यतस्त्वं

यिस्निग्धे सानुरागे सगर्वासि यद्रागिणि सानुरागे प्रियेद्वेषस्थासि असंतुष्टासि यद्दुःन्मुखे आलिंगनाय सन्मुखे विमुखतांपरांमुखतांयातासि ॥ १ ॥

सांद्रानंदपुरंदरादिदिविषद्वृंदैरमंदादरादानम्रैर्मुकुटेंद्रनीलमणिभिःसंदर्शितेन्दीवरम्॥स्वच्छंदंमकरंदसुंदरगलन्मंदाकिनीमेदुरं श्रीगोविंदपदारविंदमशुभस्कंदायवंदामहे २

इतिश्रीगीतगोविंदेकलहांतरितावर्णनेमुग्धमुकुंदवदनोनामनवमस्सर्गः ॥ ९ ॥

सर्गांतिकृद्वयशांत्यै मंगलमाचरति सांद्रेतिवयं श्रीगोविंदस्य चरणकमलमशुभस्कंदाय भक्तिप्रतिबंधकदुरितनाशाय वंदामहे कीदृशं स्वच्छंदं स्वेच्छयामकरंदवत्सुंदरं च यथास्यादेवंगलंत्यांस्रवंत्यां मंदाकिन्यां आकाशगंगायां मेदुरं स्निग्धं कीदृशं सांद्रोनिबिड़ोहर्षोयेषांते इंद्रादयो दिविषदोदेवास्तेषांवृन्दैः समूहैरमंदादराद्बहादरादासमन्तान्नम्रैर्नति युक्तैस्तैर्मुकुटेंद्रनीलमणिभिः संदर्शिताइन्दीवराभ्रमरायत्र ॥ २ ॥

इतिश्रीमत्कृष्णसेवकोदीच्यावतंसशिवदासात्मजवनमालिभट्टविरचितायांवनमालिसंजीविन्यांश्रीगीतगोविंदटीकायांकलहांतरितावर्णने
मुग्धमुकुंदवदनोनामनवमस्सर्गः ॥ ९ ॥

अत्रांतरेमसृणरोषवशामसीमनिःश्वासनिःसहमुखींसुमुखीमुपेत्य ॥ सव्रीडमीक्षितसखीवदनांदिनान्तेसानन्दगद्गदपदंहरिरित्युवाच ॥ १ ॥

श्यामेत्वथनिःश्वासम्लानबिंबाभरद्युतिम् । राधामुपेत्यकुपितांहरिरूचेसुधामुखीम् तत्कोपशांत्यैनिपुणः स्वदंडस्वसुखप्रदं तटस्थइवगोविंदो बहुरूपकृष्णोराधा मनुनय न्नाह अत्रांतरेऽस्मिन्नेवावसरेप्रदोषेराधिमुखेसुमुखीं राधामुपेत्यकोपहरस्तापहरोवाहरिः आनन्दसहितानिगद्गदानिरसावरुद्धकंठानि यथास्यात्तथा इतिवचयमाणमुवाच कीदृशीं मसृणस्यकर्कस्य रोषस्य रोषस्यवशामधानीं कीदृशीं असीमस्यदीर्घस्ययोनिः श्वासनिःसहापन्नंमुखं यस्याःसा कीदृशीं सव्रीड़ंईक्षितं सखीवदनंययाताम् ॥ १ ॥

देशवराडीरागेरूपकतालीताले ॥

वदसियदिकिंचिदपिदंतरुचिकौमुदीहरति दरतिमि

रमतिघोरम् ॥ स्फुरदधरसीधवेतववदनचन्द्रमा रोचय तिलोचनचकोरम् ॥ १ ॥ प्रियेचारुशीले२ मुंचमयिमान मनिदानम् ॥ सपदिमदनानलोदहतिममनानसंदेहि मु खकमलमधुपानं ॥ ध्रुपदम् ॥

देशवराडीरागे अष्टतालीताले ध्रुपदंरागरूपं आरब्धगमनमुद्रानिद्राघूर्णयमाननय नाभ्या । सुखशायिनिनिजदयिते देशवराडीभवेद्गौरीति ॥ लघुद्रुतौलघुश्चैवेत्यष्टतालीमकी र्तितेतितालरूपं हर्षेर्गतिनाह वदसीति हेप्रियेवल्लभेत्वंयदि किंचित्सरोपं प्रसादंवावद सितदातवदंतरुचिकौमुदींदंतद्युतिज्योत्स्नाइतिघोरं अतिभीमं दरतिमिरंसाध्वसांधका रंअपराधांधकारंवा हरति नाशयति हरतीत्यनेनमुखेहास्यं मार्थितंकिंच तववदनचंद्रमा मुखचन्द्रः स्फुरदधरसीधवे प्रकाशबहुलाधरामृतार्थं मल्लोचनचकोरं रोचयतिराधयति नेत्रपारिणं करोति अनेन श्रीराधाधरामृतं प्रार्थितं एवंगंभीरार्थमुक्त्वा वांछितमाह हे चारुशीलेसुन्दरस्वभावे मयिमानंमुंचत्यज अनिदानमकारणं अन्यंयुवतिभजनकारणर हितंवाचारुशीलायनीतयुक्तमिति गूढाभिप्रायेणोपालंभइतिभावः कीदृशेमयि प्रियवल्लभे चारुशीलेमनोहरस्वभाव इति वा मानत्यागे दोषमाह मदनानलःकामाग्निरकालेममान संदहति नायंमानसमय इतिभावःअतः सपदिशीघ्रंमुखकमलं मधुपानंचदेहि प्रयच्छ अ नेनसन्मुखीकरणंप्रार्थितं ॥ १ ॥

सत्यमेवासियदिसुदतिमयिकोपिनीदेहिखरनखरश रघातम् ॥ घटयभुजबन्धनंजनयरदखण्डनंयेनवाभवति सुखजातम् ॥ २ ॥

एवं प्रसन्नां दृष्ट्वा सानुकूलानंदमुपदिशन्नेवाह सत्यमेवासीति हेसुदति शोभनदश ने सत्यमेवयथार्थंयदिमयिकोपिनी क्रोधवत्यसि तदाखरनखरशरघातं तीक्ष्णनखनाराच घातंदेहि अनेन नखप्रहारदानेन सुरतमेवध्वनितं अयमेवदरोदण्ड किंच सापराधस्य ब धनमपि युक्तमेव भुजबन्धननेव घटयकुरु न रज्ज्वादिनाकिंच दरखण्डनं जनय विरचय एतेन दण्डातिशयः प्रोक्तः सयथा ॥ दयितावाहुपाशस्य कुतोयमपरोनिधिः जीवयत्यपि तत्कण्ठेमारयत्यप्यवर्जितः ॥ येन तव सुखसमृद्धोभवति तद्विधेहि ॥ २ ॥



वज्र

रुचिरत्नम् ॥ भवतुभवतीहमयिसततमनुरोधिनीतत्रम
मह्रदयमतियत्नम् ॥ ३ ॥

एवंकृतदण्डांप्रत्याह त्वमसीति हेप्रिये त्वं ममजीवनंप्राणोसि त्वांविनाममजीवनमपि दुर्लभमितिभावः त्वं ममभूषणमलङ्कारोसि त्वांविनाभूषणमत्यभूषणमेवाङ्गभूषणं स्वर्गमेव एतेनालिङ्गनविधिः प्रार्थितः किंच भवजलधौ संसारसमुद्रे त्वमेव ममरत्नमसि स्वजन्मरत्नाकरे त्वमेव मयारत्नंलब्धमितिभावः किंवहुक्तेन यथा कश्चिद्रत्नाकरे प्रविश्य महद्रत्नं प्राप्यसुखीभवति तथा स्वजन्मरत्नाकरे त्वां प्राप्याहमितिभावः इहत्वमेवएकजीवनमपि भवति पूज्या सततं निरन्तरमनुरोधिनी अनुकूलाभवतु तत्रप्रसादे ममहृदयं अतियत्नमतिशययत्नयुक्तंभवति ॥ ३ ॥

नीलनलिनाभमपितन्वितवलोचनंधारयतिकोकनदरूपम् ॥ कुसुमशरबाणभावेनयदिरंजयसिकृष्णमिदमेतदनुरूपम् ॥ ४ ॥

एवं नीलमुकलत्वात्संप्रतिसुरतोत्सवानुकारिलोचनानुरागं वर्णयन्नाह नीलेति हेतन्वि कृशांगि नीलनलिनाभं नीलोत्पलसदृशं तवलोचनं कोकनदरूपमतिरक्तं कमलसदृशं धारयति मांप्रतिरोषारुणत्वं धत्ते एतेन सरागावलोकनप्रार्थनमितिध्वनिः यदिइदंचक्षुः कृष्णंश्यामं कृष्णं मां वा कुसुमशरस्य कामस्य बाणभावेन बाणोत्पत्त्या वा रंजयसि रागयुक्तं करोषि तदेतच्चक्षुरनुरूपंयोग्यं भवति ॥ ४ ॥

स्फुरतुकुचकुम्भयोरुपरिमणिमंजरीरञ्जयतुतवहृदयदेशम् ॥ रसतुरसनापितवघनजघनमण्डलेघोषयतुमन्मथनिदेशम् ॥ ५ ॥

किञ्च स्फुरत्वित्यादि हेप्रियमणिमञ्जरी हारलता कुचकुम्भयोरुपरिस्फुरतुलताभवतु किञ्च सालता तवहृदयदेशंरञ्जयतु स्तनमण्डलंकरोतु एतेन पुरुषायितमेवसुरतंप्रार्थितमिवभावः किञ्च तवघनजघनमण्डले निविडकटिप्रदेशे रसनाकाञ्च्यपिरसतुशब्दं करोतु श्रृङ्गारादिरससहिता मन्मथनिदेशं कामाज्ञांघोषयतु त्वयाजितमिति मत्पराजयं घोषयत्विति ध्वनिः अनेन विपरीतरतप्रार्थना प्रकटीकृता ॥ ५ ॥

स्थलकमलगञ्जनंममहृदयरञ्जनंजनितरतिरंगपरभा

**गम् ॥ भणमसृणवाणिकरवाणिचरणद्वयंसरसलसदल क्तकसुरागम् ॥ ६ ॥**

किञ्च धृतमौनां दृष्ट्वा वचनव्यापारं कारयितुं सम्बोधयति हेमसृणवाणिस्निग्ध वचनेभणब्रूहिआज्ञपय वा सरसः सान्द्रोलसदलक्तकसुरागोगलत्यावकरसपंकोयत्र तादृशं चरणद्वयं पादयुगलं कुरवाणि कुर्यां कीदृशं स्थूलकमलस्यारुणत्वसुगन्धित्वसुकुमार त्वादिगुणैः स्वकान्त्या वा गंजनंशोभातिरस्कारकं अतएव ममहृदयरञ्जनमनुरागप्रदं कीदृशं जनितउत्पादितः रतिरङ्गेसुरतकौशलेपरभागः परस्परशोभायेन क्रौंचबन्धादौ मद्धृदयेलग्नमालक्तकलसत्परं शोभांप्रदास्यतीतिभावः स यथा ॥ क्रौंचवद्गतमुरतेबाहुपद्म युगंवधूः । संधूनयन्तीसुरते रमतेक्रौंचकस्तुस इतिकामसर्वस्वे ॥ अनेनचरणागृहीतोनुनयः कृतइतिध्वनिः ॥ ६ ॥

**स्मरगरलखण्डनं ममशिरसिमण्डनं देहिपदपल्लव मुदारम् ॥ ज्वलतिमयिदारुणो मदनकदनानलो हरतु तदुपाहितविकारम् ॥ ७ ॥**

उपेक्षोतेचरणप्रसादंप्रार्थयते हेराधे उदारंरतिजनकं पदपल्लवं चरणकिसलयं शिर सिधेहिधारय कीदृशं ममभण्डनमलंकरणं मण्डनास्यापि मण्डनमित्यर्थः स्मरगरलखंड नं कामतापनाशनं आवश्यकमेतत्कर्तव्यमेवमपि मदनस्य कामस्ययत्कदनं संतापंसएवा नलोग्निर्ज्वलति सन्तापयति कीदृशः दारुणसन्तापकः अतएव तवपदपल्लवं तदुपाहित विकारं मदनकृतोपतापंहरतु शिरःसन्तापनिवर्तनेन सर्वाङ्गपीडानिवृत्तिरितिवत्समणिइ तिपाठे दारुकमणिभ्योप्यतिसन्तापकःपल्लवाच्छादितस्य संतापोनभवति तद्वदत्रापि७॥

**इतिचटुलचाटुपटुचारुमुरवैरिणोराधिकामधिवचन जातम् ॥ जयतिजयदेवकविभारतीभूषितंमानिनीजनज नितशातम् ॥ ८ ॥**

किंच फलभूतमर्थमाह इतीति इति पूर्वोक्तप्रकारेण मुरवैरिणः श्रीकृष्णस्य राधि कां अधिराधां लक्ष्मीकृतवचन अनुसाभिप्रायवचनसमूहो जयति उत्कर्षेण वर्द्धतां की दृशं चटुलं मनोहरं चाटु प्रेमयुक्तं पटु चतुरं चारु सुकुमारं जयदेवस्य कवेर्भारत्या वाण्याभूषितमलंकृतं कीदृशं मानिनी जनसमूहस्य श्रीराधाख्यस्य वा जनितमुत्पा दितं शातंसुखं येनतत् ॥ ८ ॥

परिहरकृतातंकेशंकांत्वयासततंघनस्तनजघनयाक्रांते स्वांतेपरानवकाशिनि॥ विशतिवितनोरन्योधन्योनकोपि ममान्तरं स्तनभरपरीरंभारंभेविधेहिविधेयताम् ॥ १ ॥

प्रसन्नां दृष्ट्वात्मनः प्रसन्नतां निरूपयति परिहरेति हे कृतातंके हे कृतकामकोपे म न्यवधूभजनसंतापशंकां परिहरत्यज यतोममस्वांते हृदयेंतरमभ्यंतरं वितनोः कामा दन्यकोपि धन्यः सौभाग्यः श्लाघ्योपि न विशति प्रविशति गतेनान्यनायिका परिहा रउक्तः कीदृशे स्वांते त्वयासततं सर्वदाक्रांते व्याप्ते कीदृश्या घनस्तन जघनया घनेनिवि डे नवकाशे कठिने वा स्तनजघने यस्याः तया पुनः कीदृशे परानवकाशिनि अन्यस्याव काशशून्ये कीदृशे प्रणयिनि स्वत्प्रणयपूर्णे ये कीदृशे परीरंभारंभे कृतालिंगनोद्योगे तं विधेयतां सुरतकर्तव्यतां विधेहि कुरु विश्वस्य देहीत्यनेन कलाकुशलत्वं नायिका उक्तं आतंकः क्रोधशंकयोरितिधरणिः ॥ १ ॥

मुग्धेविधेहिमयिनिर्दयदन्तदंशंदोर्वल्लिबन्धनिविडस्तनपीडनानि॥ चंडित्वमेवमुदमंचयपंचबाणचंडालकांडदलनादसवःप्रयांति ॥ २ ॥

यथालिंगनेमौनमाचरासितत्परिहारायममानुरूपं दंडमाचरेत्याह हेमुग्धे सुंदरिमयि निर्दयं दयारहितं दंतदंशं दंतैः खंडनं दोर्वल्लिबंधः भुजलता बंधःनिविडं गाढंस्तनाभ्यां पीडनान्यालिंगनानि विधेहिकुरु कृत्वापराधेमयि सर्वेदंड्याः कर्तव्यामात्रसंकोचः कार्यः किंच हेचंडिकोपनस्वभावे हेचंडिसुरतोद्भटे वा ममापराधिनो त्वमेव मुदमानंदं अंचय प्रापुहि न त्वन्यस्यां ममानुराग इत्यर्थः नोचेत्पंचबाणपंचचंडालस्तस्य कांडदलना द्बाणप्रहरणादसवः प्राणाःप्रयांतु गच्छंतु अतोमयि प्रसन्नाभवेति प्रार्थना चंडीच सुर तोद्धतेति महोदधिः ॥ २ ॥

शशिमुखितवभातिभंगुरभ्रूर्युवजनमोहकरालकालसर्पी ॥ तदुदितभयभंजनाययूनांत्वदधरसीधुसुधैवसिद्धमंत्रः ॥ ३ ॥

ननुकोपो नास्त्येवेत्यत आहशशीतिहेशशिमुखि चन्द्रवदने तवभंगुरभ्रूकुटिः कुटि ला भ्रभांति शोभतेकीदृशी युवजनानां तरुणजनानांमोहाय कराला भीषणाकालसर्पी

कृष्णाहिविषूःतस्याः भ्रुवः सकाशादुदितं उत्पन्नं यद्भयंतस्य भञ्जनाय नाशाययूनां तरुणां नीलवाधरसीधुमयं तदेव सुधापानसाम्यान्माधुर्य्याच्चसैव सिद्धमन्त्रः साधितमन्त्रः त्रिपापहरणार्थं अधरपानं दत्वातवकोपसर्पदष्टस्य ममजीवनं सम्पादयेतिभावः ॥ ३ ॥

व्यथयतिवृथामौनंतन्विप्रपंचयपंचमंतरुणिमधुरालापैस्तापंविनोदयदृष्टिभिः ॥ सुमुखिविमुखीभावंतावद्विमुचनवंचयस्वयमतिशयस्निग्धोमुग्धेप्रियोहमुपस्थितः ४॥

एवं धृतमौनां प्रत्याह व्यथयतीति हे तन्विकृशांगि तव मौनं वृथा निःकारणं व्यथयति किंच हे तरुणि मधुरालापैः अमृतवचनैः पंचमंरागं प्रपंचय विस्तारय कटाक्षैः कामजंनाशय किंच हे शोभनवदने विमुखीभावं दत्तपृष्ठत्वं विमुंचत्यज तवैतदनुचितमितिभावः अतएव मौनंमुंच त्यज हे मुग्धे सुंदरि मूढे वा अहंप्रियः स्वयमेवानाहूत उपस्थितः समागतः कीदृशोहं अतिशयस्निग्धः संपूर्णस्नेहो महावत्सलो वा तावत् मानाग्रहो न कर्तव्यः प्राप्तफलत्वादितिभावः ॥ ४ ॥

बन्धूकद्युतिबांधवोयमधरः स्निग्धोमधूकच्छविर्गण्डश्चण्डिचकास्तिनीलनलिनश्रीमोचनंलोचनम् ॥ नासाभ्येतितिलप्रसूनपदवींकुन्दाभदान्तिप्रिये प्रायस्त्वन्मुखसेवयाविजयतेविश्वंसपुष्पायुधः ॥ ५ ॥

संप्रतिमानिना अंगानि स्पर्शयन् प्रियंब्रूते बंधूकेति हे चण्डि कोपनशीले सुरतोत्कटे वा तवाधरोयं बंधूकस्यद्युतिः कांतिस्तस्या बांधवो मित्रं सदृशश्चकास्ति शोभते किंच स्निग्धश्चिक्कणोगण्डः कपोलश्चकास्ति कीदृशः मधूकपुष्पवद्दीप्तिर्यस्य तथा तवलोचनं नीलनलिनश्रियं नीलोत्पलशोभांमोचयति त्याजयतीतिचकास्ति एतेन लोचनस्य मनोहरत्वमुक्तं तथा तवनासा नासिका तिलप्रसूनपदवीं शोभाश्रेणीं अभ्येति प्राप्नोति हेकुन्दाभदान्ति कुन्दपुष्पसदृशदशने इत्यनेन दन्तो एव उज्ज्वलोमनस्तु मयामामिति ध्वनिः हेप्रिये वल्लभे सपुष्पायुधः कामः प्रायो बाहुल्येन तवमुखसेवया विश्वं जगत् विजयते वशीकरोति पुष्पायुधस्यायुधानि तव मुखे वर्तंत इति सेवाकारत्वमुक्तम् ॥ ५ ॥

दृशौतवमदालसेवदनमिन्दुमत्यान्वितंगतिर्जनमनोरमाविधुतरंभमूरुद्वयम् ॥ रतिस्तवकलावतीरुचिरचि

त्रलेखभ्रुवावहोविबुधयौवनंवहसितन्विपृथ्वीगता ॥ ६ ।

किंच तवदृशौ मदालसे अवलोकनाय मन्दयन्ते ह्रेस्वर्गेत्वेकैव मदालसा वदनं स वमुखं इन्दुमत्याचन्द्रबुद्ध्यास्पदं स्थानं त्वन्मुखदर्शनेन सादृश्याच्चन्द्रबुद्धिर्भवतीत्यर्थः सात्वनेकधा स्वर्गेत्वेकेन्दुमती तवगतिर्गमनं जनस्य मादृशस्य वा मनोरमा मनोहारि णी साबहुविधस्वर्गेत्वेकैव मनोरमा तवोरूद्वयं विधुतरंभविलसंस्कृतकदलीकं कद लीनां बहुत्वात्तस्यापि बहुत्वं स्वर्गेत्वेकैवरम्भेति तवरतिः सुरतक्रीडाकलावती नाना क मकला कौशलयुक्ता स्वर्गेत्वेकैव चित्रलेखा अहो इत्याश्चर्ये हेतन्वि सुन्दरि पृथ्वीग तासतीत्वं विविधयौवनं नानायुवतीकदम्बभावं वहसि धारयसि ॥ ६ ॥

प्रीतिंवस्तनुतांहरिःकुवलयापीडेनसार्द्धंरणे राधापी नपयोधरस्मरणकृत्कुम्भेनसंसर्गवान् ॥ यत्रस्विद्यतिमी लतिक्षणमपिक्षिप्तद्विपेतत्क्षणात्कंसस्यालमभूज्जितंजि तमितिव्यामोहकोलाहलः ॥ ७ ॥

इतिश्रीगीतगोविन्देमुग्धमधुसूदनोनामदशमःसर्गः ॥१०॥

सर्गान्ते कविराशिषमाशास्ते प्रीतिमिति हरिर्मनोहरस्तापहरोवा वो युष्माकं गा यतां शृण्वतांच प्रीतिं भक्तिविषयिणीं तनुतां विस्तारयतु कीदृशः राधापीनपयोधर स्मरणकारी कुवलयापीड़कुम्भेन कुम्भस्थले न सार्द्धंरणे संसर्गवान् संभेदवान् कुवलयापीड़कुम्भसर्गेन राधापीनस्तनं स्मरणकृदित्यर्थः कुम्भशब्दोत्र श्रीराधा स्तनस्मारक इति यत्र यस्मिन्रणे हरिः स्विद्यति स्वेदयुक्तो भवति अथानन्तरं क्षणं च णमात्रं केनापि सुखोदयेन मीलति लोचने मुद्रितेकरोति तत्तस्मिन् क्षिप्तद्विपे प्रक्षिप्त हस्तिनि तत्क्षणा कंसस्यालमतिप्रायेण असुरचितं त्यक्तजीवितासांजितंजितमिति वेगेन व्यामोह कोलाहलो मरणभयोत्पन्नः शब्दोभूत् पक्षेद्वाभ्यां श्रीराधाकृष्णाभ्यां सु रतसंपिवति सद्विपः कामः तस्मिन् क्षिप्ते जितेद्विपे कंसस्य सुखकूजितस्य व्यामोह कोलाहलः परमसुखप्रदः किंकिणीनूपुरध्वनिः संघातकृतः जितंजितमिति परस्परं तयोरभूत् कीदृशो हरिः कुवलयं नीलोत्पलं तस्यापीड़ो माला शिरःसंवेष्टनं वा तेन सं मोदवानितिपाठः शेषंसमानं कंसोसुरेस्मरकृते कूजिते तत्सुखेपिवेतिकोषचूड़ामणिः ७॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतंस शिवदासात्मजवनमालिभट्टविरचितायां वनमालिसंजीविन्यां श्रीगीतगोविन्दटीकायां मानिनीमानापनो दनेमुग्धमधुसूदनोनामदशमःसर्गः ॥ १० ॥

सुचिरमनुनयेनप्रीणयित्वामृगाक्षीं गतवतिकृतवेषे केशवेकुञ्जशय्याम् ॥ रचितरुचिरभूषांदृष्टिमोषेप्रदोषेस्फुरतिनिरवसादांकापिराधांजगाद ॥ १ ॥

एकादशेतुनयतः प्रसन्नांसंविभाव्यताम् । उवाचकाचिद्रजनीमुखेराधांसखीवचः ॥ एवं वल्लभानुनयप्रसन्नांराधांप्रतिसख्याह सुचिरमिति कापि सखीप्रदोषेरजनीमुखेस्फुरति दीप्यमानेसति राधांजगादोवाच वक्ष्यमाणमितिशेषः कीदृशे प्रदोषे दृष्टिमोषेदर्शनचोरकेकस्मिन्सति केशवे श्रीकृष्णेसुचिरं बहुकालमनुनयेन मृगाक्षीं प्रीणयित्वा प्रसादयित्वा कुञ्जशय्यां लतागृहशयनं गतवतिसति कीदृशे केशवे कृतवेषे कृताभिसारोचितवेषे श्रीराधायां स्वस्मिन्वासंभोगेसम्पादनाय कृतालङ्करणइत्यर्थः कीदृशीं राधां रचिता कृतारुचिरा मनोहरा भूषालङ्कारोययासातां कृष्णस्य स्वस्यवेति परस्परालङ्कारकरणेन परस्परंस्नेहःसूचितः पुनः कीदृशीं निरवसादांनिर्गतोमानभङ्गादिरूपोवसादः अपतापो यस्यास्तां प्रसन्नामित्यर्थः वेषोवेषेथभूषायां वेशोवेश्मनिकथ्यते इति यादवः ॥ १ ॥

## वसन्तरागेरूपकताले ॥

विरचितचाटुवचनरचनंचरणेरचितप्रणिपातम् ॥ सम्प्रतिमञ्जुलवञ्जुलसीमनिकेलिशयनमनुयातम् ॥ १ ॥ मुग्धेमधुमथनमनुगतमनुसरराधिके ॥ ध्रुपदम् ॥

उक्तमर्थंगीतेनप्रपञ्चयति विरचितेति वसन्तरागरूप कतालध्रुवानांस्वरूपमुक्तमेव हेमुग्धेसुन्दरिराधिके मधुअधरामृतरसंवसंतं वा स्वमाधुर्यसौन्दर्यादिगुणेनमथ्नाति क्षोभयतीति मधुमथनः शृंगाररसास्वाद चतुरस्तमनुसराभिगच्छ नन्वनाकारिताकथ ब्रजामीति चेत्तत्राह नहि शृंगाररसास्वादनचतुरं अयंत्यास्तव मानभंगः किंतुगौरवमेव कीदृशंत्वद्गुणैस्त्वामेवानुगतमनुसृतं तत्रहेतुमाह कीदृशं विरचिताकृता प्राणेश्वरि प्रसीदेत्यादि चाटुप्रियवचनरचना वचनापरम्परायेनतं अनुगतत्वमेवाह चरणेत्वचरणेरचितः कृतः प्रणिपातः प्रणामोयेनतंतवानयना ममचरणे कृतदण्डवत्इतिवापुनः कीदृशं संप्रति इदानींत्वां प्रति मां संप्रेष्य मञ्जुलोमनोहरोवेतस स्तस्यसीमनिमर्यादाविधौ निकुञ्जेयत्केलिशयनं क्रीडार्थं शय्यांतामनुयातंप्राप्तं अतस्त्वयाशीघ्रंगंतव्यमिति मम प्रार्थना ॥ १ ॥

**घनजघनस्तनभारभरे दरमंथरचरणविहारम् ॥ मुख रितमणिमंजीरमुपैहि विधेहि मरालविकारम् ॥ २ ॥**

निविडे जघनस्तने कटिस्तनप्रदेशयो भारभरो भाराधिक्यं यस्यास्तत्संबोधनं श्रीकृष्णार्पणं विना जघनं केवलभारमात्रमिति ध्वनिः अतः श्रीकृष्णं मुखरितं कृतरणत्कारं मणिखचितं मंजीरं नूपुरं यथास्यात्तथाऽपैहि समीपं गच्छ किंचदर ईषन्मन्थरं मंदगतिचरणविहारं पादन्यासं यथास्यात्तथा वरानां राजहंसानां विकारम् विलासं विधेहि कुरु एवं राजहंसगत्या प्रियं रंजयेत्यर्थः अथवा कीदृशं मधुमथनं दरं त्वत्कोपेन मंथरामंदाचरणयोर्विहारो गतिर्यस्य तं अथवा कीदृशं मुखरिता कृतरणत्कारा मणिमयी मञ्जीरा मेखला यस्य तं पुनः कीदृशं मरालस्य कामस्य विकारो पीडा यस्य तं कामस्य नामांतरं मराल इति मम मनोरंजनाय न तु सर्वेषां ॥ २ ॥

**शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम् ॥ कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावम् ॥ ३ ॥**

एतनुगतत्वं प्रपंच्य दीपनविभावानाह शृण्वित्यादिना तरुणीजनमोहनमस्य मधुरिपोस्तव विरहेण मधु अन्यनायिकाधरामृतं मधुर्वसन्तो वा रिपुर्यस्य तस्य श्रीकृष्णस्य रवं मुरलीरणत्कारं तत्र गत्वा शृणु कीदृशं रमणीयतरं अतिशयेन मनोहरं किञ्च पिकनिकरे कोकिलसमूहे भावं श्रीकृष्णसंभोगानुरागं भज श्रीकृष्णेऽभिप्रायं विधेहि इति भावः कीदृशे कुसुमशरासनस्य कामस्य शासनमाज्ञा तस्या वन्दिनि स्तावके एतेनायिकगणाः कामाज्ञया मृदुवचनैस्तवाह्वानं कुर्वंति मानं हित्वा श्रीकृष्णभजनं कर्तव्यमिति च बोधयंतीति भावः ॥ ३ ॥

**अनिलतरलकिसलयनिकरेण करेण लतानिकुरम्बम् ॥ प्रेरणमिव करभोरु करोति गतिं प्रति मुंच विलम्बम् ॥ ४ ॥**

किञ्च हे करभोरु कनिष्ठांतो मणिबन्धपर्यंतः करभस्तस्य बहिर्भागस्तद्वन्निम्नोन्नतमूरु तरुणीजनानां मोहने वशीकरणे द्वयं यस्यास्तत्सम्बोधनं गतिं गमनं प्रति विलम्बं मुंच त्यज लतानिकुरम्बं लतासमूहो अनिलेन वायुना तरलश्चञ्चलो यः किसलयनिकरः पल्लवसमूहस्तद्रूपेण करेण प्रेरणमिव त्वत्प्रापणमिव करोति अनेनाचेतना अपि वृन्दावनगतत रुलताः श्रीकृष्णानुरागोदये त्वामेव प्रेरयन्ति त्वय्यनुरागञ्च बोधयन्ति किमस्माकं चेतनानां सखीनां चित्रमिति भावः अतस्तवैव महद्भाग्यमिति ध्वनिः मणिबन्धादाकनिष्ठकरस्य

कुरम्भोवहिरित्यमरः निकुरम्बकदम्ब इत्यपिसमूहे निकुरंवंस्यात्कूजितेपि चेति हलायुधः पिकादयउद्दीपनविभावाः ॥ ४ ॥

स्फुरतिमनङ्गतरङ्गवशादिवसूचितहरिपरिरम्भम्॥ पृच्छमनोहरहारविमलजलधारममुंकुचकुम्भम् ॥ ५ ॥

किञ्च हेप्रिये त्वं अमुंकुचकुम्भं प्रियागमनमङ्गलकलशं पृच्छ सहचरि सम्यक्इति नवेति प्रश्नंकुरु वर्तुलत्वात्पीनत्वाच्च कुम्भसाम्यं कुचस्य कीदृशं अनङ्गस्य कामस्य तरंगवशादिवस्फुरति सकम्पकामोत्रपयोधिस्थानीयः कलशस्तरङ्गनिपतितः स्फुरतीति भावः कीदृशं सूचितहरिपरिरम्भं सूचितो ज्ञापितोहरेः श्रीकृष्णस्यपरिरम्भो आलिङ्गनं येनतं हरिजलनिचैरेव तव कुचकलशः पूर्णोभविष्यतीति कलशशब्दप्रदर्शमितिध्वनिः पुनः कीदृशं मनोहरोयोहारो मुक्ताहारः सएव विमलाजलधारा यत्र तादृशं एतेन स्तनकलशस्य यौवनरसपूर्णत्वं ध्वनितं कम्पः सात्विकाभावजः प्रियागमनशंसी नित्यंनार्याःस्तने कम्पः प्रियसङ्गमसूचकइतिभरते ॥ ५ ॥

अधिगतमखिलसखीभिरिदन्तव वपुरपिरतिरणसज्जम् ॥ चण्डिरसितरशनारवडिण्डिममभिसरसरसमलज्जम् ॥ ६ ॥

एवं वचनमसत्यामालक्ष्य लज्जांप्रत्याह अधिगतमिति हेचण्डिकोपने सुरतोद्भटेवा इदन्तववपुरखिलसखीभिरतिशयेन रतिरणे सुरतसंग्रामे सज्जं कृतालङ्कारणादि सन्नद्धं अधिगतं ज्ञातं तासां बहुधाविज्ञातार्थे कालज्जेतिभावः कीदृशं वपुः रसिताशब्दायमाना रशनाक्षुद्रघण्टिकाच सैवरवन्ध्वनिर्डिण्डिमोवाद्यविशेषोयत्र तादृशं कृष्णमपिशीघ्रंगच्छ कीदृशं सरसं शृङ्गाररससहितं कीदृशं अलज्जं सुरतः निशङ्कं अथवा कृपयाविशेषणं वपुर्विशेषणञ्च पदत्रयं ॥ ६ ॥

स्मरशरसुभगनखेनसखीमवलम्ब्यकरेणसलीलम्॥ चलवलयक्वणितैरवबोधयहरिमपिनिजगतिशीलम् ७॥

अभिसरणमेवाह हे प्रिये करेण सखीमवलम्ब्यसलीलं लीलाशृङ्गारचेष्टा तासहितं यथा तथाचगच्छसि कीदृशेनकरेण स्मरशरवत् कामबाणवत् सुभगासुन्दरा नखायत्र अन्यत्रापि संग्रामेऽस्त्राणि भवंत्यत्रत्वामखा एवेत्यतः स्मरसहायैवगच्छेतिभावः किञ्च चञ्चलवलयक्वणितैः कङ्कणचञ्चत्कारैर्हरिमपिमनोहरमपि अहमागमेत्यत्रहितंबोधय

य अन्योपिवीरः प्रतिभटमवहितं कृत्वा युध्यत इतिध्वनिः कीदृशं निजगत्या निजगम नेन तव समीपगमागन्तुंशीलंस्वभावोयस्य अथवा निजेआत्मनि गतिर्गमनंयस्य स नि जगतिः कामस्तस्मिन् शीलं चित्तैकाग्र्यंयस्य स्मराधानमित्यर्थः ॥ ७ ॥

**श्रीजयदेवभणितमधरीकृतहारमुदासितवामम् ॥ हरि विनिहितमनसामधितिष्ठतुकण्ठतटीमविरामम् ॥ ८ ॥**

श्रीजयदेवेनभणितं हरिविनिहितमनसां कृष्णनिविष्टचित्तानां अविरामं निरन्तरं कंठप्रदेशोधितिष्ठतु आश्रयतु अधिशीङ्स्थासांकर्मेत्यधिकरणेद्वितीया एतद्धारणमात्रे ण तेषां कण्ठशोभाभवतीतिभावः कीदृशं अधरीकृतः स्वगुणैर्हीनीकृतोहारो मुक्ताहारो येन पुनः कीदृशं उदासिताः स्वगुणैः स्वकृतात्रामाः सुंदर्योयेन हरिसुरतवर्णनेन जयदेव भणितं मणिहारादिभ्यो वाऽधिकमितिभावः ॥ ८ ॥

**सामांद्रक्ष्यतिवक्ष्यतिस्मरकथांप्रत्यंगमालिंगनैःप्रीतिं यास्यतिरंस्यतेसखिसमागत्येतिचिंताकुलः ॥ सत्वांप श्यतिवेपतेपुलकयत्यानंदतिस्विद्यति प्रत्युद्गच्छतिमू च्छीतिस्थिरतमःपुंजेनिकुंजेप्रियः ॥ १ ॥**

एवमनभिगच्छंतं श्रीकृष्णस्य तदुत्कंठां निरूपयति सामामित्यादि हे सखि सा राधा मां द्रक्ष्यति आदरेण द्रक्ष्यते दृष्ट्वा स्मरकथां मनोहरानंगकेलिवार्त्तां वक्ष्यति वदिष्यति अनंगालापं कृत्वा प्रत्यंगं प्रत्यवयवं आलिंगनैः प्रीतिं स्नेहं यास्यति प्रा प्स्यति प्रीतासती मयासहरंस्यते क्रीडिष्यति इत्यनेन प्रकारेण चिंतायुक्तः सप्रियोवल्ल भः श्रीकृष्णो निकुंजे लतामंदिरे स्थिरतमः पुंजेनिश्चलांधकारसमूहे समागत्य त्वां पश्यति त्वद्भिया वेपते कंपते एतेन प्रथमसमागमावस्थामनुभवतीति ध्वनिः तच्चि ह्नमाह पुलकयत्यंगानि तवालिंगनं विभाव्य त्वत्स्पर्शसुखेन पुलकांगोभवतीति ध्वनिः किंच सुरतकेलिं संभाव्यानंदति सानंदोभवति किंच सुरतसुखं विभाव्य स्विद्यति प्रस्वे दयुक्तोभवति किंच त्वामागतां पुरतोविभाव्य प्रत्युद्गच्छति प्रत्युत्थानंकरोति किंच त्वा मदृष्ट्वा मूर्च्छति क्लेशंप्राप्नोति किं बहुधाकर्तव्यं गोपालभूपस्यांति कं त्वयागंतव्यमिति ममप्रार्थना ॥ १ ॥

**अक्ष्णोर्निक्षिपदंजनंश्रवणयोस्तापिच्छगुच्छावलिंमू र्ध्निश्यामसरोजदामकुचयोःकस्तूरिकापत्रकम् ॥ धूर्ता**

नामभिसारसत्वरहृदांविष्वङ्निकुंजेसखि ध्वांतंनीलनि
चोलचारुसुदृशांप्रत्यंगमालिंगति ॥ २ ॥

गमनं केलिगृहमंधकारं वर्णयति अक्ष्णोरिति हे सखि राधे ध्वांतं निविडांधकारं विष्वक् निकुंजे सर्वतः कुंजलतामंडपे सुदृशां सुंदरांगीणां प्रत्यंगं अंगमंगं प्रति आलिंगति तद्वदालिंगनव्याजेन स्थित्वा त्वयागंतव्य मितिभावः कीदृशं ध्वांतं अक्ष्णोर्नेत्रयो रंजनं कज्जलं निक्षिपत् विन्यसत् श्रवणयोः कर्णयोस्तापिच्छगुच्छावलीं तमालस्तवकश्रेणीं निक्षिपदिति सर्वत्रयोज्यम् किंच मूर्ध्निश्यामसरोजदाम नीलोत्पलमालां किंच कुचयोः स्तनयोः कस्तूरिकापत्रकं मृगमदपत्ररचनां कीदृशं ध्वांतं नीलनिचोलचारु नीलवस्त्रवत् चारु मनोहरं कीदृशीनां सुदृशां धूर्तानां परवंचकानां पुनः कीदृशीनां अभिसारे सत्वरं शीघ्रं हृचेतो यासां तास्तासां धूर्तः स्याद्वंचके भाले चेति हारावली तापिच्छस्तु तमालक इत्यपि ॥ २ ॥

काश्मीरगौरवपुषामभिसारिकाणामाबद्धरेखमभितो
रुचिमंजरीभिः ॥ एतत्तमालदलनीलतमंतमिस्रंतत्प्रेम
हेमनिकषोपलतांतनोति ॥ ३ ॥

आस्तांतावदभिसरणं त्वत्प्रणयपरीक्षार्थमेव तदुच्यते काश्मीरेति हे राधे एतत् तमिस्रमंधकारं तत्प्रेम तासामभिसारिकाणां प्रेम प्रीतिस्तदेव हेमसुवर्णं तस्य निकषोपलतां कषणपाषाणतां तनोति विस्तारयति ध्वांतालिंगनं यदीदृशं तर्हि कृष्णालिंगनं कीदृशं भविष्यतीत्यमूल्यप्रणयसूचितइतिध्वनिः कीदृशं तमालपल्लवनीलतममतिशयेन श्यामं कीदृशं तत्प्रेमहेम अभिसारिकाणां कीदृशमभितः सर्वतः रुचिमंजरीभिः कांतिकिरणैराबद्धा कृतारेखा येन कीदृशीनां काश्मीरं कुंकुमं तद्वद्गौरं पीतं वपुर्यासां एतेन सौंदर्यप्रभावबाहुल्यं वाभिसारिकासूचितमितिध्वनिः तादृशांधकारे भिसरंतीत्यभिसारिका ॥ ३ ॥

हारावलीतरलकांचनकांचिदाममञ्जीरकंकणमणि
द्युतिदीपितस्य ॥ द्वारेनिकुंजनिलयस्यहरिंनिरीक्ष्यव्री
डावतीमथसखीप्रियमित्युवाच ॥ ४ ॥

किंच हारावलीति अथानन्तरं सखी राधा निजगाद पुनरपिउवाच कीदृशीं निकुंजनिलयस्य चोरमन्दिरस्य द्वारे स्वांगदीप्त्यान्धकारे हरिं निरीक्ष्य व्रीडावतीं लज्जाव

तीं कीदृशस्य हारावल्यो मुक्ताहारश्रेण्यस्तासांतरलोयो मध्यमणिर्मध्यनायकः कांच नस्य सुवर्णस्य कांचिदाम मेखलादाम मंजीरं नूपुरं कंकणं करभूषणमेतेषु खचितायेम णयस्तेषां द्युत्यादीप्त्या दीपितस्य प्रकाशितस्य निनीय वा पाठः प्रियामित्युवाचेति पाठः व्रीड़ावतीं राधामानीय प्रियं हरिमुवाचेति वा योजना तरलश्चंचलेखड्गे हारम ध्यमणावपीति विश्वः निलयश्चोरमन्दिर इति हारावली ॥ ४ ॥

## वराडीरागेमंठताले ॥

मंजुतरकुंजतलकेलिसदने ॥ प्रविशराधेमाधवसमीपमिहविलस रतिरभसहासितवदने ॥ १ ॥ ध्रुपदम् ॥

वराडीरागे मंठताले ध्रुपदानां लक्षणमुक्तमेव श्लोकोक्तंगीतेनाह मंजुतरेत्यादिना हे राधे इहास्मिन् मंजुतरं मनोहरतरं यन्निकुंजतलं लताभ्यन्तरदेशस्तदेव केलिसदनं क्रीडामन्दिरं तस्मिन्माधवसमीपमन्ति प्रविश गच्छ तत्र विलस विहारं कुरु एतेन विहारातिशयउक्तः कीदृशे केलिमन्दिरे राधे रः कामोऽधि अधिको यत्र तादृशे रति रभसेन सुरतोत्साहेन हासितं वदनं यस्यास्तत्संबुद्धिः ॥ १ ॥

नवलसदशोकदलशयनसारे ॥ प्रविशराधेमाधवसमीपमिह विलसकुचकलशतरलहारे ॥ २ ॥

कीदृशे नवं नूतनं लसच्छोभमानं यदशोकदलपत्रं तन्निर्मिते शयने शय्यायां सारोरत्नं यत्र तादृशे राधासंबोधनं कुंजविशेषणं वा पुनः कीदृशे कुचयोःस्तनयोर्मध्ये तरलश्चंचलो वा हारो मुक्ताहारो यत्र तादृशं संबोधनं कुंजविशेषणं वा श्रीकृष्णपक्षे काकाक्षिगोलकन्यायेन श्रीराधासंबोधनं सदनविशेषणंच हेमाधवसमीपं प्रकरणात् राधायाः समीपमिह कुंजसदनं प्रविश विहरेतिच सर्वत्र योजनाज्ञातव्या ॥ २ ॥

कुसुमचयरचितशुचिवासगेहे ॥ प्रविशराधेमाधवसमीपमिहविलस कुसुमसुकुमारदेहे ॥ ३ ॥

किंच कुसुमेति कीदृशे इह कुसुमचयेन पुष्पसमूहेन रचितं कृतं शुचिश्शृंगारस्तद्भोगायवासगेहं शयनमन्दिरं यत्र कीदृशे कुसुमवत् सुकुमारो देहो यस्यातिमृदुले राधा विशेषणं वा अन्यत्पूर्ववत्॥ रःकामोत्पादके कम्पे युद्धेऽधः कम्पने तथेत्यनेकार्थः ॥३॥

मृदुचलमलयपवनसुरभिशीते ॥ प्रविशराधेमाधवसमीपमिहविलस वलितललितगीते ॥ ४ ॥

मृदुचलेति हे रसेन वलितं कृतं ललितं मनोहरं गीतं यया तत्संबुद्धिः हेराधे इह कोकिलवने विलस कीदृशेऽइह मृदुश्चलश्चंचलो यो मलयपवनस्तेन संपर्कवशात् सुरभे एवंभूतं सत् शीतलं तस्मिन् ॥ ४ ॥

**विततबहुवल्लिनवपल्लवघने ॥ प्रविशराधेमाधवसमीपमिहविलस चिरमिलितपीनजघने ॥ ५ ॥**

विततेति हेचिरमिलिते बहुकाले अन्योन्यसबद्धे पीनेमांसले जघने यस्यास्तत्संबुद्धिः हेराधेइह विलस कीदृशेऽइह वितता इतस्ततो विशीर्णाबह्व्यो वल्लयो वल्ल्यस्तास्नवपल्लवास्तैर्घने निविड़े शयने इत्यध्याहारः निविड़शयन इत्यर्थः ॥ ५ ॥

**मधुमिलितमधुपकुलकलितरावे ॥ प्रविशराधेमाधवसमीपमिहविलस मदनरभसरसभावे ॥ ६ ॥**

मध्विति हेमदनरभसः कामरभसः शृङ्गारस्तस्य भावोऽभिप्रायो यस्यास्तत्संबुद्धिः कीदृशेऽइह मधुनि पुष्परसेमिलितानि तत्पानार्थमित्यर्थः यानि मधुपकुलानि भ्रमरसमूहास्तैः कलितः कृतोरावः शब्दो यस्मिन् ॥ ६ ॥

**मधुतरलपिकनिकरनिनदमुखरे ॥ प्रविशराधेमाधवसमीपमिहविलस दशनरुचिरुचिरशिखरे ॥ ७ ॥**

मधुतरलेति हे दशनरुचिस्तवदन्तदीप्तिरेवरुचिरं शिखरं माणिक्यविशेषो यस्यास्तत्सम्बुद्धिः कीदृशी इहमधुनावसन्तेन तरलश्चञ्चलः पिकनिकरः कोकिलसमूहस्तस्यनिनदेनशब्देन मुखरेशब्दायिते पक्वदाड़िमबीजाभं माणिक्यंशिखरंविदुः इति शाश्वतः ७॥

**विहितपद्मावतीसुखसमाजे ॥ कुरुमुरारेमङ्गलशतानिभणतिजयदेवकविराजराजे ॥ ८ ॥**

विहितेति हेमुरारे कृष्णत्वं जयदेवकविराजराजेमङ्गलशतानि कुरु कीदृशे जयदेवकविराजराजे विहितः कृतः पद्मावत्याः स्वप्रियः सुखसमाजः शुभसमूहोयस्मिन् एतेन स्वनायिकायामेव प्रेमातिशयोदर्शितः नत्वन्यस्यां पुनः कीदृशे भणतिच गुणान्वदति क्वचित्प्रविशराधे माधवसमीपभणितेतिपाठः ॥ ८ ॥

**त्वांचित्तेनचिरंवहन्नयमतिश्रान्तोभृशंतापितः कन्दर्पेणचपातुमिच्छतिसुधासम्बाधबिम्बाधरम् ॥ अस्याङ्कन्त**

दलंकुरुक्षणमिहभ्रूक्षेपलक्ष्मीनवक्रीतेदासइवोपसेवित
पदाम्भोजेकुतःसम्भ्रमः ॥ १ ॥

एवमप्यप्रसन्नां पुनः प्रसादयन्त्याह त्वामित्यादिना हेसखि अन्यत्रजवधूजनदुरापोप्ययं श्रीकृष्णस्तवैवसुलभः तव सुधयामृतेनसम्बाधं सान्द्रं बिम्बाधरंपातुं पानंकर्तुमिच्छति कीदृशः त्वांचित्तेन मनसाचिरं सर्वदा वहन्नतिश्रान्तोतिशयश्रमयुक्तः किञ्च कन्दर्पेण कामाग्निनाच भृशमतिशयेन तापितोदग्धः अन्योपि भाराक्रान्तो मधुरपानादिना स्वामिन्याच जीव्यत इतिभावः तस्मादेवमनुरक्तस्यास्य कृष्णस्याङ्कमुत्सङ्गं क्षणं क्षणमात्रमलं कुरुभूषय वहुवल्लभोयंकृष्ण इति मत्वेहास्मिन् कृष्णेकुतः सम्भ्रमः सन्देह' तत्रहेतुः दासइव सेवके कीदृशे भ्रूक्षेपः कटाक्षपातोमदीयमितिविलोकनं तस्ययालक्ष्मीः शोभा तदेव धनंतस्य योलव अल्पमौल्यं नेत्रकोणनिरीक्षणं तेनक्रीतेगृहीते पुनः कीदृशे तवैवोपसेवितं पदाम्भोजंचरणकमलंयेन ॥ १ ॥

सासाध्वससानन्दंगोविन्देलोललोचना ॥ सिंजानामञ्जुमञ्जीरंप्रविवेशनिवेशनम् ॥ २ ॥

एवमनुनयसन्तुष्टानिकुञ्जं प्रविवेशेत्याह सेति साराधानिवेशनं केलिमान्दिरं प्रविवेश किंकुर्वती मञ्जुमञ्जीरं मनोहरनूपुरं सिंजाना वादयन्ती ससाध्वसं सुरतभयसहितं सानन्दमानन्दसहितं यथास्यात्तथा कीदृशी गोविन्देलोले चञ्चले लोचनेनेत्रे यस्याः सा सिजानेति सात्विक कम्पेनचरणस्खलनं साध्वसहर्षौ व्यभिचारभावौ लोललोचनेति रसानुभावः कटाक्षः एतेन शृङ्गाररसः साङ्गस्तयोर्मिलनेसञ्जात इति निरूपितम् ॥ २ ॥

वराडीरागेरूपकताले ॥

राधावदनविलोकनविकसितविविधविकारविभङ्गम्
जलनिधिमिवविधुमण्डलदर्शनतरलिततुङ्गतरङ्गम् ॥ १ ॥
हरिमेकरसंचिरमभिलषितविलासम् ॥ सादर्दशगुरुहर्षवशंवदवदनमनङ्गनिवासम् ॥ ध्रुपदम् ॥

रागतालध्रुपदानिपूर्ववत् एवं निकुञ्जमन्दिरे प्रवेश्य तां सम्प्रतिहरिदर्शनमहोत्सवानाह राधेति साराधा हरिंददर्श कीदृशं राधावदनचन्द्रविलोकनेन विकसिता ये नानाविकाराजृम्भाङ्गविमर्दनाद्यास्तएव विशिष्टोभंगोयत्र तंकमिव जलनिधिमिव समुद्रमिव क [illegible] त्रि मुमण्डलदर्शनेन [illegible] तरलिताश्चञ्चलीकृत

स्तुङ्गा अत्युच्चास्तरङ्गाः ऊर्मयो यत्र तं अत्रागाधगम्भीरत्वेन जलधिसाम्यं श्रीराधामुखस्य चन्द्रसाम्यं जृम्भाङ्गमर्दादिना तज्जसाम्यं कीदृशं एकःश्रृङ्गाराख्योरसोनुरागोयस्यत यद्वाएकस्यां राधायां रसोनुरागोयस्य नान्यायुतं कीदृशं चिरं बहुकालमभिलषितो वाञ्छितोविलासः केलिर्येनतं अथवा चिरमभिलषितः प्रार्थितो विलासो राधासम्बन्धी क्रीड़ायेनतं कीदृशं गुरुर्महान् यः प्रियाशब्दयाहर्षआनन्दस्तस्यवशं वदमयीनं वक्षं यस्यतं पुनः कीदृशं अनङ्गनिवासं काममन्दिरं मन्मथकोटिप्रकाशमित्यर्थः ॥ १ ॥

**हारममलतरतारमुरसिदधतंपरिलम्बितदूरम् ॥ स्फुटतरफेनकदम्बकरम्बितमिवयमुनाजलपूरम् ॥ २ ॥**

कीदृशंविदूरमतिशयेन परिरब्धालिङ्गितोरसिवक्षसिहारंदधतं बिभ्राणं कीदृशं हारं विमलतरस्तारो विमलमौक्तिकं यत्र तं किमिवस्फुटतरः प्रकाशमङ्गुलोयःफेनसमूहः तेन करंबितंमिश्रितं यमुनाजलपूरं प्रवाहमिव अत्रकृष्णद्युतेः कल्लोलत्वेन यमुनायाःसाम्य हारस्यातिविमलत्वेनफेनसाम्यं ॥ २ ॥

**श्यामलमृदुलकलेवरमण्डनमधिगतगौरदुकूलम् ॥ नीलनलिनमिवपीतपरागपटलभरवलयितमूलम् ॥३॥**

पुनः कीदृशंहरिंश्यामलं मृदुलं कोमलं शरीरमंडनं शरीरस्य प्रत्यंगंयस्यतं कीदृशं अधिगतं परिहृतंप्रियांगस्पर्शाद्यागौरदुकूलं पीतांबरंयेन कमिवपीतपरागानां गौरपुष्परेणूनांपटलभरः समूहातिशयस्तेनवलयितंवेष्टितंमूलं यस्यतादृशं नीलकमलमिव अत्रश्रीकृष्णस्य श्यामत्वेन परागसमूहस्यपीतेनांतर्बहिर्मूले परागाष्टतत्वादद्भुतोपमैव ॥ ३ ॥

**तरलदृगंचलचलनमनोहरवदनजनितरतिरागम् ॥ स्फुटकमलोदरखेलितखञ्जनयुगमिवशरदितड़ागम् ॥४॥**

कीदृशंहरिंतरलानांचञ्चलानां कटाक्षाणांचलनेनमनोहरं यद्वदनेनजनितोरतिरागः सुरतानुरागोयेन तमर्थाद्राधायाः एतेनदर्शनसौख्यपराकाष्ठा दर्शिता कीदृशं स्फुटानां विकासितानां कमलानामुदरेमध्ये खेलितानिक्रीड़ायुक्तानि खञ्जनयुगानि चंचरीटपक्षियुगलानि यत्रतादृशं शरदि शरत्काले तड़ागमिव सरोवरं यथाभवति तथाभवति तथा श्रीकृष्णः श्रीराधादर्शनेनभवतीत्यर्थः अत्रेयंव्यवस्था तड़ागस्थानीयः श्रीकृष्णः विकसितकमलस्थानीये तस्यनेत्रे कमलोदरस्थानीयं नेत्रयोर्मध्यभागं खेलितखञ्जनस्थानीयेतन्नेत्रगोलके शरत्स्थानीया श्रीराधेति यथातथोपमुत्यं श्रीराधायाःशरत्कालत्वेन कृष्णस्य चन्द्रस्यविकासोजात इतिध्वनिः ॥ ४ ॥

**वदनकमलपरिशीलनमीलितमिहिरसमकुंडलशोभम् ॥ स्मितरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ५ ॥**

कीदृशं हरिं श्रीराधावदनकमलस्य परिशीलनेनात्यादरावलोकनेन मीलिते स्थिरीभूतेमिहिरसमे सूर्यसदृशे कुण्डलेतयोः शोभायस्यतं तांविनाभरणशोभापिभारवहेति ध्वनिः यथा सूर्यदर्शनेन श्रीकृष्णवदनकमलप्रकाशोयात इति प्रेमपराकाष्ठादर्शिता कीदृश स्मितरुच्या ईषद्धास्यकान्त्या रुचिरोमनोहरा तथा समुल्लसितो राधाधरपानोत्कम्पितो योधरपल्लवस्तेन कृतो राधायारतिलोभः सुरततृष्णायेनतं यथा सूर्यमण्डले कमलप्रीतिस्तथा श्रीराधामुखेच्छेतिध्वनिः अनेन श्रीराधायामेवतस्य रतिलोभो सूचितो नान्यत्र ॥ ५ ॥

**शशिकिरणच्छुरितोदरजलधरसुन्दरकुसुमसुकेशम् ॥ तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ६ ॥**

कीदृशं शशिकिरणैः छुरितं कर्बुरितमुदरंयस्य जलधरस्य तद्वत्सुन्दराः सकुसुमाः केशायस्यतं पुष्पानां चन्द्रकिरणैः साम्यं केशानांवलाहकसाम्यं एतेन नायकस्य नायिकादर्शनेनातिश्रृङ्गारित्वमुक्तं कीदृशं तिमिरेन्धकारेउदितं यद्विधुमण्डलं चन्द्रबिम्बं तद्वन्निर्मलोयो मलयजतिलकस्तस्य निवेशोरचनाविशेषो यस्यतं तिलकस्य वर्तुलत्वात्पूर्णचन्द्रसाम्यं एतेन नायकस्य वर्तुलत्वात्पूर्णचन्द्रसाम्यं एतेनतिलकशोभोक्ता ॥ ६ ॥

**विपुलपुलकभरदन्तुरितंरतिकेलिकलाभिरधीरम् ॥ मणिगणकिरणसमूहसमुज्ज्वलभूषणसुभगशरीरम् ७ ॥**

पुनः कीदृशं विपुलैः विस्तीर्णैः पुलकभरैरोमांचितसमूहैर्दन्तुरितंव्याप्तं अनेनापि नायकस्य नायिकादर्शनेन रोमांचउक्तइतिध्वनिः कीदृशं रतिकेलिकलाभिः सुरतक्रीडायां चुम्बनालिङ्गनादिकामकलाचातुरीभिरधीरं चञ्चलं अथवा रतिकेलिकलाभिरुपलक्षिता श्रीराधास्तस्यादर्शनेनाधीरं एतेन नायकस्य नायिकादर्शनेनातिव्याकुलतेतिध्वनिः कीदृशं मणिगणानां आभरणखचितरत्नसमूहानां किरणसमूहैः समुज्ज्वलानि दीप्यमानानि भूषणान्यङ्गाभरणानितैः सुभगं सुन्दरं शरीरं यस्यतं अथवा राधायामणिगणकिरणसमूहेन समुज्ज्वलभूषणैः सुभगं शरीरं यस्यतं अथवा श्रीराधांगान्येव मणिगणकिरणसमूहेन समुज्ज्वलभूषणैः सुभगं शरीरं यस्यतं ॥ ७ ॥

श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम् ॥ प्रणमत हृदि विनिधाय हरिं सुचिरं सुकृतोदयसारम् ॥ ८ ॥

श्रीकृष्णभजनं शिक्षयन् सर्वानुपदिशति श्रीजयदेवेति हे रसिकाः सुचिरं नितरां हरिं साधूनां भजनानुसरणापापतापहरं हृदि विनिधाय हृदये आरोप्य प्रणमत सएव भजनीयो नान्य इति नमतेति नमनमेव सर्वं करिष्यतीत्युपदेशः कीदृशं सुकृतस्य पुण्यस्योदयेन सारं प्राप्तिर्यस्य तं ऋगताविति धातुः हरिस्तु भजनसुकृतिनः प्राप्यत इति प्रसिद्धिः पुनः कीदृशं श्रीजयदेवभणितस्य गीतस्य विभवेन सामर्थ्येन जयदेवसरस्वत्यास्वगुणवर्णनेनेति द्विगुणीकृतो भूषणभारोऽलङ्कारसमूहो येन जयदेवसरस्वती स्वयमेवोपमालङ्कारवती भवद्गुणैश्च सुतरामलंकृतेति भावः ॥ ८ ॥

अतिक्रम्यापांगं श्रवणपथपर्यंतगमनप्रयासेनेवाक्ष्णोस्तरलतरतारं पतितयोः ॥ इदानीं राधायाः प्रियतमसमालोकसमये पपात स्वेदाम्बुप्रसर इव हर्षाश्रुनिकरः ॥ १ ॥

संलग्न श्रीराधायाः श्रीकृष्णदर्शनेन हर्षं दर्शयत्यतिक्रम्येति इदानीं तत्क्षणे प्रियतमसमालोकनसमये कृष्णावलोकनकाले राधायाः अक्ष्णोर्नेत्रयोर्हर्षाश्रुनिकरः सात्विकभावेनानन्दजलसमूहः पपात क इव अपांगनेत्रप्रांतमतिक्रम्य श्रवणपथस्य कर्णमार्गस्य पर्यंतगमनप्रयासेनैव स्वेदांबुपूर इव प्रस्वेदजलप्रसर इव कीदृशयोरक्ष्णोः श्रीकृष्णदर्शनाभिकांक्षगतिशयेन चञ्चलत्वं प्रापितयोः प्रायशः श्रीराधादर्शनाच्छ्रीकृष्णस्याप्येतानि चिह्नानि जातानीतिध्वनिः ॥ १ ॥

भजंत्यास्तल्पांतं कृतकपटकंडूतिपिहितस्मितं याते गेहाद्बहिरवहितालीपरिजने ॥ प्रियास्यं पश्यंत्याः स्मरशरवशाकूतसुभगं सलज्जाया लज्जाव्यगमदिव दूरं मृगदृशः २

पुनस्तदेव प्रकारांतरेणाह भजंत्या इति मृगदृशो मृगाक्ष्या राधायाः तल्पांतं शय्याप्रांतं भजंत्याः प्राप्नुवंत्याः अवहिते सावधाने आलीपरिजने सखीसेवकवर्गे गेहाद्बहिर्याते सति लज्जा सखीव दूरमतिशयेन व्यगमदतिदूरमगमत् कीदृशे परिजने कृतं कपटेन कर्णादिकंडूति तेन पिहितं स्मितं हास्यं येन तस्मिन् कीदृश्या प्रियास्यं कृष्णमुखं पश्यंत्याः कीदृशं स्मररसेन कामरसेनाकूतं क्रीडाविलासस्तेन सुभगं सुन्दरं आकूतं स्यादिंगेकामे क्रीडिते ध्वनितार्थके इति हलायुधः ॥ २ ॥

**जयश्रीविन्यस्तैर्महितइवमन्दारकुसुमैःस्वयंसिंदूरेण द्विपरणमुदामुद्रितइव ॥ भुजापीड़क्रीड़ाहतकुवलयापी ड़करिणःप्रकीर्णासृग्बिन्दुर्जयतिभुजदंडोमुरजितः ३ ॥**

**इतिश्रीगीतगोविन्देऽभिसारिकावर्ण नेएकादशः सर्गः ॥ ११ ॥**

सर्गान्तेकविराशिषमाशास्ते मुरजितः श्रीकृष्णस्य भुजदंडोजयति सर्वोत्कर्षेण वर्त्तते कीदृशः प्रकीर्णाः सर्वत्र संलग्नाः असृक्बिंदवो रुधिरकरणायत्र कीदृशस्यभुजा पीड़स्य बाहुदण्डस्य क्रीड़याहतः कुवलयापीड़नामाकरीहस्तियेन तस्य कइव जय श्री याविजयशोभयोविन्यस्तैर्नानारचयासिमैर्मन्दारकुसुमैः पारिजातपुष्पैर्महित इव पूजित इव पुनः कइव स्वयंस्वयमेव सिन्दूरेण द्विपस्य हस्तितोरणे मुदानन्देन मुद्रितइवचिह्नि तइव अथवा स्वयं आत्मनासिन्दूरेण वीररसोदयेन द्वीपेन द्वाभ्यां श्रीराधाकृष्णाभ्यां श्रृङ्गाररसंपिवतीति द्विपः कामस्तेनयोरणः सुरतसंग्रामस्तत्र मुदानन्देन मुद्रितइव प्रकीर्णं शकलेप्रोक्तं विस्तरेपीति यादवः ॥ ३ ॥

इतिश्रीगोविन्देएकादशःसर्गः ॥ ११ ॥

**गतवतिसखीवृन्देमन्दत्रपाभरनिर्भर स्मरशरवशाकू तस्फीतस्मितस्नापिताधराम् ॥ सरसमनसंदृष्ट्वाराधांमु हुर्नवपल्लवप्रसवशयनेविक्षिप्ताक्षीमुवाचहरिःप्रियाम् १॥**

कीदृशीं प्रार्थितां कांतां राधां संप्राप्य केशवः सुप्तां पल्लवशय्यायामुवाच तस्मि तमंजुलम् १ गतवतीति सरसंश्रृंगाररसहितं यथास्यात्तथा हरिःप्रियां श्रीराधां दृष्ट्वोवा च वक्ष्यमाणमिति शेषः कास्मिन् सति सखीवृन्दे लज्जया ऽसंभ्र अनुपमं गतवति अ पयातं कीदृशीं अमन्दा अधिका यात्रपा लज्जा तस्या योभरोतिशयस्त्यागो वातेन ये स्मरसाः कामबाणास्तद्वसाद्यदाकूतं साभिप्रायो विलासो वातेन स्फीतं प्रवृद्धं यस्मितमीषद्धास्यं तेनस्नपितौ व्याप्तावधरौ यस्यास्तां पुनः कीदृशीं मुहुर्वारंवारम् नवपल्लव प्रसवशयने नूत्न किशलय पुष्पशय्यायां निहित नयनं एतेन सुरतेच्छा नस्याः सूताः ॥ १ ॥

विभासरागेएकतालीताले ॥

किशलयशयनतलेकुरुकामिनि चरणनलिनविनिवेशम् ॥ तवपदपल्लववैरिपराभवमिदमनुभवतुसुवेशम् ॥
क्षणमधुनानारायणमनुगतमनुसरभोराधिके ध्रुपदम् १॥

हरिःप्रियामाहेति यदुक्तं तदाहतेनाह किशलयेति गीतस्य विभासरागः तत्स्वरूपं स्वच्छन्द संमानित पुष्पचापः प्रियारसस्वादुरसाभितृप्तः पर्यंकमध्येस्य कृतोपवेशो भासोविपूर्वः किलहेमगौरः तालध्रुवोरेः स्वरूपमुक्तमेव हेराधिकेऽधुनामां अनुसरभज कीदृशं क्षणमनुगतं त्वदनुग्रह क्षणमनुगामिनं अधीनं वा अथवा तवक्षण मधुनाक्षण मधुरेण मदेन वसन्तेन वा नुगतवाधीनं पुनः कीदृशं नानापुरुषस्तस्यायेनारः शृङ्गारः सअयनमाश्रयो यस्यतं तस्येदमित्यगरनङ्गादिभ्यः प्राकृतस्य पणादेशः एतेन शृङ्गारः अयो नारायण इति सिद्धं अथवा नाराआप नारा अश्रुजलानिवा अयनमाश्रयो यस्य तं त्वद्वियोगानलसंतप्तत्वाजले वसामि रोदनं करोमि वेति भावः हेकामिनि चरणनलिनस्य प्रवेशं पल्लवतल्पे कुरुप्रवेशय इदं तवपद पल्लव वैरियतो शयनं नस्मा पराभवं तस्कात्यातिरस्कारमनुभवतु प्राप्नोतु कीदृशं सुन्दरं पल्लवरचनादिनालंकृतमपि तवपद विपक्षं पल्लवतल्पं त्वच्चरणविन्यास जयं प्राप्नोत्वित्यर्थः अनेनान्यनायिका सिरसु पादारोपः कृतो भविष्यतीति भावः ॥ १ ॥

करकमलेनकरोमिचरणमहमागमितासिविदूरम् ॥
क्षणमुपकुरुशयनोपरिमामिवनूपुरमनुगतिशूरम् ॥ २ ॥

हे राधे अहं तव चरणं करकमलेन हस्तकमलेन करोमि संवाहयामि कथमिति चेत् यतस्त्वं विदूरमा गमितासि अतिदूरं आगतासि सख्या नीतासीति वा अतः क्षणं नूपुरं शयनोपरिशय्यायामुपकुरु नूपुरं चरणयोर्निवेशयेत्यर्थः कामिव अनुगतौ तवानुसरणे शूरं मामिव नूपुरानुगमन शूरत्व कथनव्याजेन तत्पादस्पर्शं प्रार्थयत् इति भावः ॥ २ ॥

वदनसुधानिधिगलितममृतमिवरचयवचनमनुकूलम् ॥विरहमिवापनयामिपयोधररोधकमुरसिदुकूलम् ३॥

किंच अमृतमिव जीवनप्रदं वचनमनुकूलं सानुरागं रचयकाय कीदृशं वदनमेव सुधानिधिश्चन्द्रस्तस्माद्गलितं च्युतं आशापामिचेत् तर्हि उरसि स्थितं दुकूलं पट्टवस्त्रं वि

रहमिव वियोगमिवां पनयामि दूरीकरोमि किमिति पयोधर रोधके स्तनाच्छादकं एते नान्यत्र विरहदुःखशान्तंतु तत्रैवास्तीतिध्वनिः ॥ ३ ॥

प्रियपरिरम्भणरभसवलितमिव पुलकितमतिदुरवापम् ॥ मदुरसिकुचकलशंविनिवेशय शोषयमनसिजतापम् ॥ ४ ॥

किंच हे प्रिये वल्लभे मदुरसि ममवक्षसि कुरु कलशं न शयाप्पयोन्न मनसिजस्य कामस्य तापंसन्तापमात्मनो मम शोषय नाशय तत्स्पर्शमात्रेण कामपीड़ा निवृत्तिभविष्यतीति भावः कमिव प्रियस्य परिरंभे आलिंगने योरभसो राभस्यं त्वरोत्कंठतं तेन वलितमिव व्याप्तमिवा कीदृशं पुलकितं जातपुलकं एतेन रससूर्यमाणः पुलकव्याजेन बहिरुद्भूत इति ध्वन्यते पुनः कीदृशं दुरवापमति दुर्लभंत्वदनुग्रहेणैव सुलभाध्वनिः कुचकलशपदं केलि सिन्धुलस्यायोक्तामिति भावः कामज्वरे शीतलजल पूर्ण कलशालिंगनं विधातव्यमेव यथा कलश कांस्य जलंप्लुतभाजनं विरहिणी वदनज्वर शांतये विरचयेन्निपुणस्त सखीजनो नलिनचन्दन पंकजयोजनमिति ॥ ४ ॥

अधरसुधारसमुपनयभाविनिजीवयमृतमिवदासम्॥ त्वयिविनिहितमनसंविरहानलदग्धवपुषमविलासम्५॥

एवमप्य प्रसन्नां प्रतिभात इवा हे भाविनि प्रशस्तानिप्राये अधरसुधारसं अधरामृतं उपनयसमर्प्य अधरसंयोगं कुर्वित्यर्थः किंच धरामृतं दत्वादासं त्वच्चरणानुवर्तिनं मांमृतमिव जीवय त्वदधरामृत पातेनैव ममजीवनं नान्यथेतिभावः किंच त्वयि विनिहितमनसं त्वद्ध्यानेन दत्तं चित्तं किंच विरहानलेन दग्धवपुषं शरीरं अतएवाविलासं विलासरहितं एतेन देहैकजीवनमात्रं कथितम् ॥ ५ ॥

शशिमुखिमुखरयमणिरसनागुणमनुगुणकंठनिनादम्॥ ममश्रुतियुगलेपिकरवविकलेशमयचिरादवसादम् ॥६॥

किंच हे शशिमुखि चंद्रवदने श्रुतियुगले कर्णयुगे मुखिरसनागुणं कांचीदाम मुखरय वाचालंकारय सुरतविपरीतं विधाय वाचालंकारयेत्यर्थः अनुगुणः सदृशः कंठस्य निनादः कूजितं यत्रत किंच श्रुतियुगले पिकरुतैः कोकिलशब्दैर्विकले व्याकुले विरहिणा तद्वनिदुःखदएव तदर्पणेनावसादं संतापं ममशायय नाशय रसनाकांचि जिह्वयोरिति मेदिनीकारः ॥ ६ ॥

**मामतिविफलरुपाविफलीकृतमवलोकितुमधुनेदम्॥**
**मीलतिलज्जितमिवनयनंतवविरमविसृजरतिखेदम्७॥**

एवं श्रुत्वा किंचिद्विलोकयंति ईषत्प्रसन्नां प्रत्याह मामतीति हे प्रिये इदानीं तवेदंन यनं मामवलोकितुं दृष्टं मीलति मुद्रां प्राप्नोति किंमिचल्लज्जितमिव कृता विहिता चरणा दिति कीदृशांमां अतिविफलरुपा अतिशयनरर्थकक्रोधेन विफलीकृतं प्रियावलोकना दिसुखवंचितं नयनविशेषणं वा विरमतिः फलाक्रोधात् रतौखेदंश्रमं पीड़ादैन्यं वा वि सृज्य त्यज सुतमोहं मादृशो विसृजोतिध्वनिः ॥ ७ ॥

**श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् ॥**
**जनयतुरसिकजनेषुमनोरमरतिरसभावविनोदम् ॥ ८ ॥**

श्रीजयदेवभणितं कथितं इदंगीतं रसिकजनेषु एतत्संभाषिवतांतःकरणेषु मनोरमं रतिजनकं रतिसंभोगः शृंगाररसभावाः संचारि सात्विकादयस्तैस्लेषो वा विनोदं कौ तुकं जनयतु उत्पादयतु कीदृशमिदं अनुपगतं प्रतिदं निगदितो मधुरिपुमोदः कृष्णहर्षो यत्रकं अथचैवसंबंधः श्रीजयदेवभणितं श्रियः राधायाः दर्शनेन जयोआनंदो यस्य दीव्य ति क्रीड़ति इतिदेवः सवासौ श्रीकृष्णस्तेन भणितं श्रीराधां प्रतिमाम नुसरेत्य नुनयवा क्यं कथितं कीदृशं अनुपदं निगदितं मधुरंयोः स्वस्यमोदो हर्षोयत्र तादृशं अन्यत्समानं मुत्प्रीतिः प्रमदोहर्षं इत्यमरः ॥ ८ ॥

**प्रत्यूहःपुलकांकुरेणनिविड़ाश्लेषेनिमेषेणच क्रीड़ाकू तविलोकितेऽधरसुधापानेकथानर्मभिः ॥ आनन्दाभिग मेनमन्मथकलायुद्धेपियस्मिन्नभूदुद्भूतः सतयोर्बभूवसुर तारम्भःप्रियंभावुकः ॥ १ ॥**

तमनुवर्ण्यमियं प्रतिभावि सुरतारंभमाह प्रत्यूहेतितयोः राधाकृष्णयोः ससुरतार म्भः प्रियंभावुक अप्रियभवन शीलः परमसुखकर्ता वा उद्भूतः प्रकटेबभूवः सकः यस्मि न् निविड़ाश्लेषेण दलिगनेकर्तव्ये सुरतारंभे पुलकांकुरेण रोमोद्गमेन प्रत्यूहो भूत किंच नैतावद परमपितु मुखारंभे ऽधरसुधापाने विधेये कथानर्मभिः रहः कथाकौतुकैः प्रत्यू होभूत किंच सुरतारंभे आनंदा दाभिगमेन आनंदप्राप्य मन्मथ कलायुद्धे कामचतुः षष्ठि कलान्वित संग्रामे प्रत्यूहे भूत एतैः सुरते विघ्नबाहुल्यं विपरीत रसस्य दुर्लभताच कथिता ॥ १ ॥

दोर्भ्यांसंयमितःपयोधरभरेणापीडितःपाणिजैराविद्धोदशनैःक्षताधरपुटःश्रोणीतटेनाहतः ॥ हस्तेनानमितःकचेऽधरमधुस्यन्देनसंमोहितः कान्तःकामपितृप्तिमापतदहोकामस्यवामागतिः ॥ २ ॥

सुरतमेवविचित्ररसारम्भे दर्शयति दोर्भ्यामित्यादि दोर्भ्यां बाहुभ्यां सापराध इवालिङ्गनेश्यमितोयंत्रितः किञ्च पयोधरभरेण स्तनभारेणापीडितः किञ्च पाणिजैर्नखैराविद्धः खण्डितः दन्तैः क्षताधरपुटः भक्षिताधरः श्रोणीतटेवतिलम्बेनाहतः संमर्दितः किञ्च कचेकेशेधृत्वाहस्तेनानमितो नम्रीकृतः पादयोर्स सद्दव किञ्च अधरमधुरस्यन्देन अधरामृतद्रवेन संमोहितविस्मृतान्यरसः कृतः एवं विडम्बितोपिकान्तः श्रीकृष्णःकामप्यनिर्वचनीयां तृप्तिमवापतस्तोहेतोः अहो आश्चर्यं कामस्य वामा विरुद्धागतिः स्थितिः अथवा वामयति नामयति इति वामापराभवकारिणी वामामनोज्ञा वा एतेन विपरीत सुरतंस्पष्टमेवोक्तं वामोविरुद्धशीलेस्यात्क्रूरेरम्ये विकथ्यत इति हलायुधः नायकप्रार्थितो दण्डः प्रसादत्वेन विनियुक्त इतिध्वनिः ॥ २ ॥

मारांकेरतिकेलिसंकुलरणारम्भेतयासाहसप्रायंकान्तजयायकिंचिदुपरिप्रारंभियत्संभ्रमात् ॥ निष्पंदाजघनस्थलीशिथिलतादोर्वल्लिरुत्कंपितंवक्षोमीलितमक्षिपौरुषरसःस्त्रीणांकुतःसिद्ध्यति ॥ ३ ॥

तस्य तृप्तिं विशिनष्टि मारांक इति अनया श्रीराधया साहप्रायं सबहुलं कांतजयाय श्रीकृष्णजयं कर्तुं तदुपरिकांतो परिकिंचिल्लोकोत्तर सुरतमिति शेषः रतिकेलि संकुल रणारंभे रतिकेलिभिः संश्लेष चुंबनादिभिः संकुले व्याप्ते रणारंभे संग्रामोपक्रमेयत यदा प्रारंभितदा साहसात्संभ्रमात् जघनस्थली निःस्पंदा निश्चलाभूदितिशेषः कीदृशे कामस्यांकः छिद्रं नखक्षतादि यत्र किंच दोर्वल्लिर्वाहुलता शिथिलताश्लथीभूता वक्षोहृदयं उत्कंपितं अक्षिचक्षुर्मीलितं मुद्रितं आलिंगनाय केनापि रसविशेषण सर्वजातमिति भावः एवंकृतोपि स्त्रीणां पौरुषरसः पुरुषाभिलापः कुतः कथं सिद्ध्यति अपितु न सिद्ध्येदेवेत्यर्थः संकीर्णं संकुले व्यास इति यादवः ॥ ३ ॥

तस्याःपाटलपाणिजांकितमुरोनिद्राकषायेदृशौनिर्धु

ताधरशोणिमाविलुलितस्रस्तस्रजोमूर्धजाः ॥ कांचीदाम दरश्लथांचलमितिप्रातर्निखातैर्दृशोरेभिःकामशरैस्तदद्भुतमहोपत्युर्मनःकीलितम् ॥ ४ ॥

एवं पुरुषायितेन स्वजयमलभमाना स्वभावमवलंब्यात्मजयं कृतवतीति तामेव जयसंपत्तिमाह तस्या इति एभिः पूर्वोक्तैः कामशरैः पत्युर्मनः कीलितं वशीकृतं तदद्भुतमाश्चर्यमभूत मनस्तावदयमन्यवशमागच्छेदिति भावः कीदृशैः प्रातर्निखातैः प्रातः प्रातःकाले दृशोर्नेत्रयोर्निखातैरारोपितैः केते शरास्तानाह तस्याः राधायाः उरः पाटल पाणिजैः रक्तनखैरंकितं चिह्नितं तस्याः दृशौनयने निद्रया कषायेति लोहितो तस्याः अधर शोणिमा अधररागः निर्धौतः पीतः चुम्बनादिना किंच तस्याः मूर्द्धजाः केशाः विलुलिताश्रस्ताः शिथिलिताश्रजो माल्यैभ्यस्ते तस्याः दर ईषत् सर्थ शिथिलं अंच अंचलं वस्त्रान्तं तादृशं कांचीदामेखला गुणानीवी मोचनं तानि कामपंचशरत्वेन निरूपितानि अन्यत्र निखातैर्बाणै रन्यत्कीलित मिदमित्याश्चर्यमित्यर्थः ॥ ४ ॥

व्याकोसःकेशपाशस्तरलितमलकैःस्वेदलोलौकपोलौदष्टाविंबाधरश्रीःशुचकलशरुचाहारिताहारयष्टिः॥ कांचीकांचिद्गताशांस्तनजघनपदंपाणिनाच्छाद्यसद्यःपश्यंतीसत्रयंमांतदपिविलुलितस्रग्धरेयंधिनोति ॥ ५ ॥

तदेवाह व्याकोस इति इयं श्रीराधा तदपिमां विनोति प्रीणयति यद्यपि केशपाशः केशकलापोव्याकोसो विलुलितो जातः अलकैश्चूर्णं कुन्तलैस्तरलितं इतस्ततः प्रसृत कपोलौ स्वेदेन सात्विकभावजलेन चंचलौ बिम्बाधरः श्रीः दृष्टा खण्डिता कुचकलश रुचा कान्त्याहार यष्टिर्हार कलापः हारिता निर्जिताः कांची मेखला कांचिदाशांदि स गता चालिता तथा विधा जातापि किं कुर्वतीह स्तन जघनपदं स्तन नितंब भाग माच्छाद्य सद्यः शीघ्र सत्रपं सलज्जमां पश्यति कीदृशी विलुलितां म्लानां स्रजं धारयन्ति मज्जया यकृत प्रवृत्ता स्वयमेव मानपरा भवेति भावः ॥ ५ ॥

रामकरीरागेणयतितालेगीयते

कुरुयदुनन्दनचन्दनशिशिरतरेणकरेणपयोधरे ॥ मृग

मदपत्रकमत्रमनोभवमंगलकशलसहोदरे १ निजगादसा
यदुनन्दनेक्रीड़तिहृदयानन्दने ॥ ध्रु० ॥

यद्राधानिजगाद तदेवगीतेनाहकुर्वीतिरामकरीरागः हृदयानंदने चित्तहर्षकेयदुनंद
ने कृष्णेक्रीड़तिसति साराधा निजगादउक्तवती किंनिजगादेत्यतआह हेयदुनन्दनकृष्ण
त्वं ममअत्रास्मिन्पयोधरे करेणस्वहस्तेन मृगमदपत्रकं कस्तूरिका पत्रावलींकुरु कीदृशे
नकरेण चन्दनवच्छिशिरेण अतिशीतलेन कीदृशेपयोधरे मनोभवस्य कामस्य मङ्गला
यकलशः पूर्णकुंभस्तस्य सहोदरे तुल्येमङ्गलं हिरण्यमितिवा ॥ १ ॥

अलिकुलगञ्जनसञ्जनकंरतिनायकसायकमोचने ॥
त्वदधरचुंबनलंबितकज्जलमुज्ज्वलयप्रियलोचने ॥ २ ॥

किंचहेप्रियवल्लभा लोचनेनेत्रे त्वदधर चुंबनेनलंबितंविगलितं कज्जलमुज्ज्वलय पुन
रप्ययया कीदृशं भ्रमरसमूहमर्दनं पराभवजनकं कीदृशे रतिनायकस्य कामस्य सायकान्
मोचयतीतिमोचने कामबाणाय हारिणि यद्वीक्ष्य जगद्विजयाय कामोबाणंनमुञ्चति तादृशे
पुनः कीदृशे कामजालस्य क्रीड़ा किंवापरमप्याह हेशुभवेष रुचिरमूर्ते ममश्रुतिमण्डले
कर्णप्रदेशे कुण्डले निवेशयार्पय ॥ २ ॥

नयनकुरङ्गतरङ्गविकासनिरासकरेश्रुतिमण्डले ॥ म
नसिजपाशविलासधरेशुभवेशनिवेशयकुंडले ॥ ३ ॥

कीदृशे नयनकुरंगस्य नेत्रमृगस्य तरङ्गानां विकासस्य प्रकाशस्य निरासकरे निरो
धके एतेनकर्णांत् विशाललोचनत्वमुक्तं उक्तारके वेषोऽलङ्करणे कोलिभवनेद्भुतभावक
इतिवैजयन्ती लंचितंगलिते मोक्षंलंबमानदुरापयोरितिरत्नकोषः ॥ ३ ॥

भ्रमरचयंरचयंतमुपरिरुचिरंशुचिरंममसन्मुखे ॥ जि
तकमलेविमलेपरिकर्मयनर्मजनकमलकंमुखे ॥ ४ ॥

किंचहेप्रियेममभुखे अलकंचूर्णं कुंतलंपरिकर्मयमंडय चुंबनादिना अलकं कीदृशं
उपरिमुखोपरिशुचिरं निरंतरं भ्रमरसमूहं भ्रमरश्रेणीशोभां जनयंतंसजातीय शुद्धाभ्रम
रास्तत्र पतंतीतिभावः पुनः कीदृशं रुचिरमनोहरं नर्मजनकं परिहासक्रीड़ाकारकं नर्म
जनः परिहाससखीजनः तस्यकं सुखरूपंवा कीदृशे विमलेनिर्मले अनेनकलंकाभावः सू
चित सुन्दरेऽनुपहामि मुखमापुन कीदृशे दे

जित कमलजितमालम नयनकांत्याकमलं येनतत्संबोधनं शातदा द्रविमले कामस्तेन विमलेप्रसन्नो परिकर्म प्रतिकृतोभूषणे दासकर्मणीति कोषसर्वस्वे ॥ ४ ॥

**मृगमदरसवलितंललितंकुरु तिलकमलिकरजनीक रे॥विहितकलंककलंकमलाननविश्रमितश्रमसीकरे५ ॥**

मृगमद हे कृष्ण अलिकर रजनीकरे ललाटचंद्रे तिलकंकुरु रचयाकदिशां कस्तूरी रसेन निर्मितं अतएव ललितं मनोहर विहिताकृता कलंककला चंद्रकलंक शोभा साद श्यं येनतत कीदृशो विश्रमितो विश्रामं प्रापितो श्रमसीकरोंबुकणोपत्र ताडशे ललाटम लिकं गोधिरित्यमरः मृगनाभिर्मृगमदः कस्तूरी गंधशेपर इति हारावलीवलितं निर्मिते युक्त इति यादवः सीकरोंबु करणास्त्वत इत्यमरः रोहिणीशो निशानाथो रजनीकर इति हलायुधः ॥ ५ ॥

**ममरुचिरेचिकुरेकुरुमानदमनसिजध्वजचामरे ॥ र तिगलितेललितेकुसुमानिशिखंडिशिखंडकडामरे ॥ ६ ॥**

किंचहेमानद मानखण्डन प्रदायक इतिवाममरुचिरे सुन्दरेचिकुरे केशपाले कुसु मानिकुरुचरशा मनसिजस्य कामस्यध्वजचामर तुल्येकीदृशोरतिगलिते सुरतसमये ब धनमुक्ते शृंगारेचेष्टया सुन्दरेवा कीदृशे शिखंडिनो मयूरस्य शिखंडकाश्चंद्रकास्तएव डामरा आटोपा आडंबरा वाचाकचिक्याति वायस्यताडशो डामरोवाथ भेदास्यादा टोपसिः खिनामपीतिभोज ॥ ६ ॥

**सरसघनेजघनेममशम्बरदारणवारणकंदरे ॥ मणिर शनावसनाभरणानिशुभाशयवासयसुन्दरे ॥ ७ ॥**

हेप्युमासयष्युमांतःकरणासमसुन्दरे जघनेनितंबेमणि रसनामणि पंचित क्षुद्रघं टिका वसनाभरणानि वासय परिधानं कारयकीदृशो सरसेशृंगारादि रससहितेघने निविड़ेचकर्मधारयः पुनः कीदृशे शंबरदारणः सएववारणः कुंजरस्तस्य कंदरेनिवासे कुं जरोवारणः करीत्यमरः ॥ ७ ॥

**श्रीजयदेववचसिशुभदेहृदयंसदयंकुरुमण्डने ॥ हरि चरणस्मरणामृतनिर्मितकलिकलुषज्वरखंडने ॥ ८ ॥**

श्रीजयदेवेतिहेभक्तजनत्वंमण्डने अलङ्कारभूते शुभदे कल्याणप्रदे श्रीजयदेववच सिगीतरूपे हृदयंमनः सदयं दयायुक्तंतत्परंकुर्वित्यर्थः कीदृशेवचसि हरिचरणस्मरणा मृतेन निर्मितेकृतं कलिकलुषज्वरस्य कालिकृतपापरूपज्वरस्य खण्डनंनाशोयेन ॥ ८ ॥

प्रतिबिंबसंबलतयाविभ्रद्वपुर्विक्रियाम् पादाम्भोरुहधा रिवारिधिसुतामक्ष्णादिदृक्षुःशतैः ॥ कायव्यूहमिवाचरन्नु पचिताकूतोहरिःपातुवः ॥ १ ॥

सर्गांतेकविराशिषमासास्ते पर्यमिति हरिर्वोयुस्मान् पातुरक्षतु कीदृशः कायव्यूहं बहुशरीरमिवाचरन् उपस्थितं समृद्धं आकूतं कामभारोयस्यसः कीदृशः अक्ष्णांशतैःसह स्वैःपादांभोरुजं कृष्णाचरणा कमलंधारयति धारणीयावारिधिसुताक्ष्मीतांदिदृक्षुः द्रष्टुमि च्छुःलक्ष्मीदर्शनंतु नेत्रयुग्मेनन संभवतीति कायव्यूहंनेत्रसहस्रंकृत्वा द्रष्टव्येति भावःकिं कुर्वन् पर्यंकीकृतः शय्यास्थाने कृतोयोनागनायकः शेषस्तस्य फणाश्रेणीनांपंक्तीनांयेमण यस्तेषां गणसमूहे संक्रांतबिंब सबलतया संवद्धप्रति बिंबप्रसरणेन वपुर्विक्रियां विस्तर प्रकारं विभ्रत्दधत् मणीनामनंतत्वादनंत देहलाभेन तादृक्नेत्रलाभोभूदित्यर्थः पक्षेवारि धितुल्यगुणो वृषभानुस्तत्सुता श्रीराधातद्दर्शनमेकेनवपुषा कुर्वाणोपि तोषमलभमानः कायव्यूहमिवा चरन्नितितुल्यं अस्मिन्पक्षेताग शब्देननाशनं तंप्रतिशोभार्थं निहिताये मणिगणा इत्यादि व्याख्येयंश्रेणीतु कथितापंक्तौश्रेणी तुल्यार्थमसंहता पीतियादवः सं क्रांतः प्रतिबिंबस्यात्प्रवेशे संक्रमेपि चेदित्यपि ॥ १ ॥

त्वामप्राप्यमयिस्वयंवरपरांक्षीरोदतीरोदरेशङ्केसुन्द रिकालकूटमपिवन्मूढोमृडानीपतिः ॥ इत्थंपूर्वकथाभि रन्यमनसोविक्षिप्यवामाञ्चलं राधायाःस्तनकोरकोपरि मिलन्नेत्रोहरिःपातुवः ॥ २ ॥

पुनः कविर्ग्रन्थसमासायाशिषमासस्तेत्वामिति हरिर्वः पातु हेसुन्दरि मृडानीपतिः रुद्रः क्षीरोदतीरोदरे क्षीरसमुद्रतटे त्वामप्राप्यकालकूटं विषमपिवदितशङ्के इत्थमनेन पू र्वकथाभिरन्य मनसाऽन्य मनस्कायावक्षोचलं स्तनावरकवस्त्रं विक्षिप्य यसायैराधाया स्तनकोरकौ जाताङ्कुरौ तदुपरि मिलनेत्रः कीदृशीं त्वां मयिस्वयं वरपरां अनेन किशोर लीलासत्वंध्वनिः ॥ २ ॥

साध्विमाध्वीकचिंतानभवतिभवतः शर्करेकर्कशासि द्राक्षेद्रक्ष्यंतिकेत्वाममृतमृतमसिक्षीरनीरंरसस्ते ॥ माक न्दक्रन्दकान्ताधरधरणितलंगच्छयच्छान्तियावद्भावच्छृङ्गा रसारस्वतानिजयदेवस्यविष्वग्वचांसि ॥ ३ ॥

इदानीं कविरात्मनः काव्यस्य माधुर्यादि गुणत्वं कथयति साध्वीति हे माध्वीक मधो भवनस्तवेयं मधुरा हेमिति चिंता साध्वी न भवति एतत्सदृशं भवामीति चिंतैव न कार्या किंच हे शर्करे त्वंच कर्कशासि कार्कश्येन रजोरूपासीत्यर्थः किंच हे द्राक्षे त्वां केऽद्रक्ष्यंति आस्वादयिष्यंति अवलोकयिष्यंति लिया किंच हे अमृतत्वयापि माधुर्यमाद कादकादि गुणातिशयेन मर्त्योऽनभ्यार्यः तदपेक्षया त्वंमृतमसि हे क्षीरते तवरसः नीरंजल वद् मधुरं हे माकंदय कांतफल क्रंद विलप किंच हे कांताधर त्वं पातालंगच्छ जयदेव स्य विष्वक्समस्तयैववचांसि यावत् शृंगारभावं श्रीराधाकृष्णविषयं यच्छंति तावत्सु धाभिर्धैर्यं कीदृशा निशारत्नलानि सरस्वती सारभूतानि जयदेवभणितामृतेन सर्वे पदार्थानिराकृता इतिभावः ॥ ३ ॥

## साधूनांस्वतएवसंमतिरिहस्यादेवभक्त्यर्थिनामालो च्यग्रंथनश्रमंचविदुषामस्मिन्भवेदादरः ॥ येकेचित्परकृ त्यपश्रुतिपरास्तानर्थयेमत्कृतिं भूयोवीक्ष्यवदंत्ववद्यमिह वेत्सावासनास्थास्यति ॥ ४ ॥

## इतिश्रीगीतगोविंदेसुपीतपीतांबरोनामद्वादशःसर्गः ॥१२॥

श्रीभोजदेवप्रभवस्य रामदेवीसुतस्य श्रीजयदेवकस्य पाराशरादि प्रियवर्गकंठे श्रीगीतगोविन्द कवित्वमस्तु स्वटीकायां सवसम्मति योग्यतामाह साधूनामिति इदं वनमालिसंजीविन्यां श्रीगीतगोविन्द टीकायां भक्त्यार्थिनां साधूनां भक्तानां संमतिः स्वीकारः स्यादेव विदुषामपि नानार्थशृंगाररस ग्रन्थनश्रमं विचार्य अस्यामादरो भवेदे व येच भक्ति पाण्डित्यहीना विरक्ताः परग्रन्थनिन्दा परास्तानर्थं ये याचे मत्कृ तिभूयो वारंवारं वीक्ष्य इहटीकायाम वद्यं वदन्तु कौकाश्रमेषु शास्त्रेषु परं निन्देच्छा वासनास्थास्यति चेत् भक्तिमार्ग परिशीलनेन कुतः सादुर्वासनेति टीकाग्रन्थमालोक्य सारंसारंसमुद्धृतां तत्रापि स्खलितं किञ्चित् क्षन्तुमर्हन्तुसूरयः १ शिवदासतनूजेन भट्टे नवनमालिना । गीतगोविन्दटीकेयं विरचिताशुभदास्तुवः २ वैशाखेकृष्णपक्षस्य कादश्यां शुभमङ्गले । वाराणस्यांकृताटीका भटेनवनमालिना ३ काश्यांनरोत्तमग्रहमध्ये मध्यमा चवसर्वयोः । रचितागीतगोविन्द टीकाश्रीवनमालिना ४ कालिंदिजातीरविहारशीलं गोपांगनालोचनाभिरामं । वंशीरवैर्मोहित मारकोटिं वंदेसदातंवृषभानुजारतं ॥ ५ ॥

इतिश्रीमत्कृष्णचन्द्रसेवकोदीच्यावतन्सशिवदासात्मजवनमालिभट्टविर चितायांवनमालिसंजीविन्यांश्रीगीतगोविंदटीकायांसुपीत पीतांबरोनामद्वादशःसर्गःसमाप्तःशुभंभूयात् ॥ १२ ॥

# ORDER FORM

*On receipt of your order you w ll be sent a licence agreemer should be returned to ELDA duly signed by the legally au*


**Please, return this form to:**
ELDA S.A.
55-57 rue Brillat Savarin
75013 Paris, France
Tel: +33 1 43 13 33 33 - Fax: +33 1 43 13 33 30
Email: mapelli@elda.org


*fields)*

e and surname*: Saurabh Nasa ........ ........................................

Indian Institute of Information Technology,Allahabad.....................

Information Technology .........................................................

oom No. 207, IIIT-A, Jahlwa, Allahabad(U.P.)

1011 ...................................... Country* :India.................

2-2552376 Extension-8167 ......................................................

...........................................................................................

_02@iiita.ac.in ......................................................................

-community number (compulsory for European Union member states)

.. ...........................................................................................

LRA member: YES ☐ NO ☒

:e to order the following items:

| Resource name + short description if needed | * Type of use[1] | Quantity |
|---|---|---|
| The EMILLE/CIIL corpus | R | 1 |

:h use; C = Commercial use
:e not included

* 15-03-2005 Signature*: Saurabh Nasa